अखिलभारतीय–प्राच्यविद्यासम्मेलनम्
शतवर्षमहोत्सवग्रन्थमाला–४४

भामहीयकाव्यालङ्कारस्य

# उद्यानवृत्तिसमीक्षा

डॉ. मञ्जूषा चन्ने (ठेमदेवः)

प्रधानसंपादकः
आचार्यः श्रीनिवासः वरखेडी
कुलगुरु

संपादकः
आचार्यः मधुसूदनः पेन्ना
संचालकः संशोधन–प्रकाशनविभागः



राष्ट्रहिताय संस्कृतम्

कविकुलगुरु–कालिदास–संस्कृत–विश्वविद्यालयः
रामटेकम्, जि. नागपुरम् (महाराष्ट्रम्)
तथा
न्यू भारतीय बुक कॉर्पोरेशन, नव देहली

2020

अखिलभारतीय–प्राच्यविद्यासम्मेलनम्
शतवर्षमहोत्सवग्रन्थमाला – 44

भामहीयकाव्यालङ्कारस्य

# उद्यानवृत्तिसमीक्षा

समीक्षिका
डॉ. मञ्जूषा चन्ने (ठेमदेवः)

प्रधानसंपादकः
आचार्यः श्रीनिवासः वरखेडी
कुलगुरु

संपादकः
आचार्यः मधुसूदनः पेन्ना
संचालकः संशोधन–प्रकाशनविभागः




कविकुलगुरु–कालिदास–संस्कृत–विश्वविद्यालयः
रामटेकम्, जि. नागपुरम् (महाराष्ट्रम्)
एवं

न्यू भारतीय बुक कॉरपोरेशन, दिल्ली

| | | |
|---|---|---|
| शीर्षकम् | – | उद्यानवृत्तिसमीक्षा |
| समीक्षिका | – | डॉ. मञ्जूषा चन्ने (ठेमदेवः) |
| प्रधानसंपादकः | – | आचार्यः श्रीनिवासः वरखेडी<br>कुलगुरु, क.का.सं.वि., रामटेकम् |
| संपादकः | – | आचार्यः मधुसूदनः पेन्ना<br>संचालकः संशोधन–प्रकाशनविभागः<br>क.का.सं.वि., रामटेकम् |
| संपादकमण्डलम् | – | डॉ. दिनकर मराठे, क.का.सं.वि., रामटेक<br>डॉ. वीना गाणु, नागपुर. |
| प्रकाशनवर्षम् | – | २०२० |
| आवृत्तिः | – | प्रथमा |
| मूल्यम् | – | 110.00 |
| आय.एस.बी.एन. | – | 9788183154222 |
| मुखपृष्ठम् | – | श्री. उमेश पाटील, क.का.सं.वि., रामटेकम् |
| प्रकाशकः | – | कुलसचिवः,<br>कविकुलगुरु–कालिदास–संस्कृत–विश्वविद्यालयः,<br>प्रशासकीयभवनम्, मौदामार्गस्य, रामटेकम्. |

एवं

न्यू भारतीय बुक कॉरपोरेशन
२०८, द्वितीय तल, प्रकाशदीप बिल्डिंग,
४७३५/२२, अंसारी रोड, दरिया गंज,
नई दिल्ली – ११०००२
फोन नं. : २३२८०२१४, २३२८०२०९



एस. के. आफॉसेट, दिल्ली

## PREFACE

It is indeed a matter of great pleasure and pride for Kavikulaguru Kalidas Sanskrit University, Ramtek to have this rarest opportunity of hosting the 50th session of All India Oriental Conference at Nagpur. This AIOC-50th session at Nagpur will be forever remembered by all as the year 2019 also happens to be the year of Centenary Celebration of AIOC. The premier objective with which the great scholars of yester years had contemplated and established this national academic event called All India Oriental Conference has been achieved through these years with scores of young scholars contributing significantly to the treasure house of knowledge through their valuable research work.

The research of yore and of the present should be properly recorded so as to make it easily available to all lovers of knowledge and wisdom in the years to come. With this objective, we have contemplated to commemorate the 100th year of this grand event of 50th session of AIOC by way of publishing 100 monographs on different subjects in four languages viz., Sanskrit, Hindi, Marathi and English. It is no doubt a herculean task but still worth of it, for the reason that these 100 monographs will inspire many young scholars to take upon a fresh study and research of the oriental subjects with more vigour and zeal.

The AIOC Centenary Publication Series includes wide variety of subjects like Literature, Language, Veda, Indian Philosophy, Sanskrit Grammar, Law, Children Literature, Yoga, Astronomy and Astrology, Ayurveda, Pali, Prakrit, Jain, Buddhism, Education, Library Science, Poetics, Aesthetics, and Indology. It also includes reprint of some rare texts of academic importance which have gone out of print are not easily available. We wish to mark this centenary celebrations with this series that connects the glory of the past and aspirations of future. I place on record my sincere gratitude to all the authors of these monographs who have kindly contributed to the richness of this

series.

I am confident that the books published in these series will definitely inspire the lovers of Oriental Learning in general and of Sanskrit Language and Literature in particular.

On this occasion, we have published a memorable book of all the speeches of Section-Presidents of all previous sessions of AIOC. It is indeed a very capacious addition to any collection. I with all respect thank two eminent scholars of our times - Prof. Gautam Patel, President and Prof. Saroja Bhate, General Secretary, the torch bearers of AIOC who have not only encouraged us in this venture but also made all efforts to provide these valuable historical speeches for us. I thank all executive members of AIOC and my colleagues of the varsity for making this event a grand success.

My words fall short in describing the painstaking efforts and scholarly commitment of my esteemed colleague Prof. Madhusudan Penna, local secretary of this session in bringing out this series.

I also take this opportunity to profusely thank Shri. Subhash Jain and Shri Dipak Jain, the proprietors of New Bharatiya Book Corporation, New Delhi for their enthusiastic approach and timely work with all precision and grace.

Let us all sanctify ourselves in the eternal flow of wisdom by reading these books and recommending these to others also!

सरस्वती श्रुतिमहती महीयताम्

Ramtek — Prof. Srinivasa Varakhedi
10th January 2020 — Vice Chancellor, KKSU

# Kavikulaguru Kalidas Sanskrit University
# All India Oriental Conference

**100th Year 50th Session**
**10th-12th January, 2020**

## Chief Patron
Hon'ble Nitin Gadkari
Minister of Road, Transport & Highways of India

## Patron
Prof. Srinivasa Varakhedi
Vice Chancellor, KKSU, Ramtek

## AIOC President
Prof. Gautam Patel
Chairman, Sanskrit Seva Samiti, Ahmedabad.

## AIOC General Secretary
Prof. Saroja Bhate
Professor of Sanskrit (Retd.), Pune University, Pune

## AIOC Local Secretary
Prof. Penna Madhusudan
Dean, KKSU, Ramtek

## Additional Local Secretary
Dr. Harekrishna Agasti
Dr. Kalapini Agasti
Dr. Dinakar Marathe
Dr. Parag Joshi

## Organising Committee
Prof. C.G. Vijayakumar, Registrar (I/c) & Dean, KKSU, Ramtek
Prof. Nanda Puri, Dean, KKSU, Ramtek
Prof. Krishnakumar Pandey, Dean, KKSU, Ramtek
Prof. Laita Chandratre, Dean, KKSU, Ramtek
Dr. Ramachandra Joshi, Finance Officer, KKSU, Ramtek
Dr. Umesh Shivahare, Controller of Examination, KKSU, Ramtek
Dr. Dipak Kapade, Librarian, KKSU, Ramtek
Dr. Renuka Bokare, PRO, KKSU, Ramtek

Shri. Rajivranjan Mishra, Technical Head, KKSU, Ramtek
Shri. Pravin Kalambe, Security Officer, KKSU, Ramtek

## Reception Committee

Prof. Srinivasa Varakhedi, Chairperson Reception Committee & VC, KKSU
Parampujya Govindagiri Swamiji, Rishikesh
Prof. P.T. Chande, Former VC, KKSU
Prof. Uma Vaidya, Former VC, KKSU
Prof. Vijendra Kumar, VC, National Law University, Nagpur
Prof. Rajnish Shukla, VC, National Hindi University, Wardha
Prof. Vinayak Kane, VC, RTM Nagpur University, Nagpur
Shri. Krupal Tumane, Member of Parliament
Shri. Girishji Vyas, Member of Legislative Council
Shri. Chandrashekhar Bawankule, Guardian Minister, Nagpur
Prof. Vishram Jamdar, Director, VNIT, Nagpur
Dr. Bhushankumar Upadhyay, Commissioner of Police, Nagpur
Shri. Vijay Phanshikar, Editor, The Hitavada, Nagpur
Shri. Rajkumar Tirpude, Tirpude Group of Insitutions, Nagpur
Shri. Mohabbat Singh, Tuli International, Nagpur.
Shri. Chandragupta Varnekar, Principal Retd., Nagpur
Shri. Suresh Sharma, Baidyanath, Nagpur
Shri. Prabhakar Rao Mundle, Dharampeth Educational Institutions, Nagpur

## Executive Committee

Prof. G. U. Thite,
Vice President

Dr. Brijeshkumar Shukla,
Treasurer

## Members

Dr. Rajni Satish Chandra Jha
Prof. Shukla Ramakant
Dr. Behera Ranjit
Dr. Meena Shukla
Dr. Nirmala Kulkarni
Dr. Roy Gauri Nath
Dr. Tripathi Uma Rani
Dr. Pushpa Jha
Dr. Basu Ratna
Dr. Mithilesh Kumar
Prof. Singh Prasoon Dutta
Shri. Mishra Arun Ranjan
Dr. Mishra Baidyanath
Dr. Tripathi Rajendra Rasraj
Shri. Harshdev Madhav
Dr. Kamdev Jha
Dr. Parinita Deshpande
Dr. Jha Udayanath (Ashok)

# पुरोवाक्

**भामहीयकाव्यालङ्कारस्य उद्यानवृत्तिसमीक्षा** इति ग्रन्थः अधुना प्रकाश्यतां याति। अलङ्कारसम्प्रदायस्य प्रवर्तकः आचार्यभामहः **काव्यालङ्कार** इति साहित्यशास्त्रीयग्रन्थं रचयामास। तस्य टीका उद्यानवृत्तिरिति। अस्याः उद्यानवृत्तेः समीक्षा कर्तव्येति मनसि विचारः समुद्भूतः। यतो हि कस्यचित् शास्त्रीयग्रन्थस्य व्याख्या कथं भवेदिति उद्यानवृत्तिः अस्मान् संसूचयति। तथैव विवेचकेनापि नानाशास्त्रद्यवेक्षकेन भाव्यमिति ज्ञापयति। उद्यानवृत्तेः पर्यालोचने महामहोपाध्यायस्य डि. टि. श्रीशैलताताचार्यस्य वैशिष्ट्यं पाण्डित्यञ्च बोधिष्यते। तस्मादेव इयं समीक्षा न केवलमध्येतॄणां कृते उपयोगिनी अपि तु भामहीयकाव्यालङ्कारस्य सामान्यपरिचयायोपकारिणी स्यादिति मे विश्वासः।

भवदीया

डॉ. मञ्जूषा चन्ने ( ठेमदेवः)

# विषयानुक्रमणिका

# भामहीयकाव्यालङ्कारस्य
# उद्यानवृत्तिसमीक्षा

टीका काव्यालङ्कारस्य बहवः सन्ति यद्यपि।
उपलब्धासु टीकासु शोभते उद्यानवृत्तिः।।

अलङ्कारसम्प्रदाये भामहाचार्यस्य स्थानम् अद्वितीयमनन्यसाधारणमिति सर्वविदितमेव। अलङ्कारसम्प्रदायस्य प्रवर्तकोऽयं भामहाचार्य काव्यशास्त्रं नाट्यशास्त्रात् पृथगुद्धृत्य **'काव्यालङ्कार'** इति ग्रन्थं प्राणैषित्। भामहालङ्कारविषये विपश्चितामादर एव प्रकटयति तदीयं महत्त्वम्। तस्मादेव तस्य व्याख्यां विधातुमहमहमेकया अग्रेसरन्ति विद्वांसः। ग्रन्थस्यास्य अनेकासु व्याख्यासु एकतमा विद्यते महामहोपाध्यायैः डि. टि. ताताचार्यमहाभागैः प्रणीता **उद्यानवृत्तिः** इति व्याख्या। इयं वृत्तिः भामहाचार्यस्य प्रतिभां लीलया आविष्कर्तुं सक्षमा इत्यतः तस्याः व्याख्यायाः विषये किमपि प्रतिपादयितुं चिकिर्षति मे मनः। तेन हि न केवलं भामहीयस्य काव्यालङ्कारस्य विश्लेषणं सञ्जायते अपि तु पण्डितराजस्य डि. टि. ताताचार्यशिरोमणेः पाण्डित्यमपि अभिव्यनक्ति।

दाक्षिणात्यः श्रीशैलताताचार्यः तञ्जापुरान्तर्गत-श्रीमत्पञ्चनदस्थ-संस्कृतमहाकलाशालायां मीमांसाशास्त्रस्य प्राध्यापकः आसीत्। मीमांसाक्षेत्रे कृतपरिश्रमश्चासौ **मीमांसाऽभ्युदयः** इति प्रसिद्धग्रन्थस्य कर्ता। तदानीं प्रधानमीमांसकत्वेन ख्यातः सन् सम्पादनकर्मण्यपि अग्रत्वेन गण्यते स्म। अनेन भामहीय-काव्यालङ्कारस्य उद्यानवृत्तिनामिकां टीकां विलिख्य आदर्शटीकाकारेण कथं भवितव्यमिति प्रदर्शितम्।

## उद्यानवृत्तिरिति नामनिर्देशविशेषः

पण्डितवर्यैः श्रीशैलताताचार्यमहोदयैः गतशतके **'उद्यानपत्रिका'** इति अप्रतिमशोधनिबन्धात्मिका मासिकपत्रिका प्रकाश्यते स्म। तस्यां पत्रिकायां प्रसिद्धग्रन्थानां व्याख्या अपि प्रकाशिता भवन्ति स्म। तत्रैव भामहालङ्कारस्य

श्रीशैलताताचार्यविरचिता वृत्तिरपि प्रकाशिता आसीत्। उद्यानपत्रिकायां प्रकाशिता व्याख्या इत्यतः ‘उद्यानवृत्ति’ इति नामधेयम्।

अथ च उद्याने यथा स्वैरं भ्रमणं शक्यं तथैव अनया वृत्त्या भामहीयः काव्यालङ्कारः इत्यस्य ग्रन्थस्य आकलनं वा अवगमनं वा सहजम्। अत एव **उद्यानवृत्तिः** इति व्याख्यायाः नामाभिधानं सार्थकं प्रतिभाति।

## उद्यानवृत्तेः उद्दिष्टम्

पण्डितराजेन डि. टि. ताताचार्यमहोदयेन उद्यानवृत्तिव्याख्यायाः उद्दिष्टमुपोद्धाते प्रोक्तमस्ति। तद्यथा-

प्रतापरुद्रयशोभूषणे प्रप्रथमं सञ्जातं भामहनामश्रवणं तथा च प्राचीनग्रन्थावलोकनकौतुहलं भामहीयं काव्यालङ्कारं समग्रं पठितुं ताताचार्यमहाभागं प्रैरयत्। तदानीमेव मद्रराजधानीविश्वविद्यालयस्य प्राच्यविद्येश्वर ( Master of Oriental Learning) इति बिरुदलाभहेतोः काव्यलक्षणं नाम भाषान्तरमयम् उपन्यासविशेषं लेखितुं विषयसङ्कलनमारब्धमनेन महाभागेन। बहुषु प्राचीनालङ्कारग्रन्थान्तरेष्विव अत्रापि गाढं परिचयं प्राप्तुं प्रायतत व्याख्याकारः। तदाऽस्मिन् तत्र तत्र दृष्टा अर्थप्रतीतिविघातिन्योऽशुद्धयः यदि शक्यं तर्हि कथमपि परिश्रम्य शोधनं कर्तव्यमिति मतिः समभवत् श्रीशैलताताचार्यवर्यस्य। ततो गच्छत्सु दिनेषु तैस्तैः दुर्व्याख्यातान् भामहश्लोकान् वीक्ष्य अनतिविस्तृतं व्याख्यानमेव काव्यालङ्कार इत्यस्य ग्रन्थस्य करणीयमिति धीः सञ्जाता। अपि च षट्सु वर्षेषु भामहालङ्कारस्य तत्तदशुद्धिशोधने तात्पर्योपलम्भे च यशः सम्प्राप्य उद्यानवृत्तिं व्यरचयत् पण्डितराजः डि. टि. ताताचार्यशिरोमणिः।

## भामहीयस्य काव्यालङ्कारस्य परिचयः

**उद्यानवृत्तिः** इति भामहाचार्यकृतकाव्यालङ्कारस्य व्याख्या इत्यतः तस्य काव्यालङ्कारग्रन्थस्य परिचयः सङ्क्षेपेणात्र दीयते।

काव्यशास्त्रविषयके काव्यालङ्कारे षट्परिच्छेदास्सन्ति। प्रथमे परिच्छेदे काव्यसाधनतल्लक्षणतद्भेदाः वर्णिताः। द्वितीये तृतीये चालङ्काराः विवेचिताः।

चतुर्थे भरतोक्ताः दशदोषाः प्रपञ्चिताः। पञ्चमे न्यायविषयः मीमांसितः। षष्ठे च विवादास्पदपदशुद्धिः विचारिता। संहृत्यात्र ३९९ परिमिताः श्लोकाः विराजन्ते।

भरताचार्यस्य **नाट्यशास्त्रम्** इति ग्रन्थादनन्तरमेव अलङ्कारशास्त्रस्य सर्वमान्यः ग्रन्थोऽस्ति भामहस्य **काव्यालङ्कारः**। अस्य विस्तृतपरिचयः उद्यानवृत्तिमाध्यमेन भविता एव।

## उद्यानवृत्तेः वैशिष्ट्यम्

भामहकाव्यालङ्कारस्य उद्यानवृत्तेः विशेषगुणा अधुना एकैकशः निरूप्यन्ते। तत्र ह्यादौ काव्यालङ्कारवृत्तिकारेण उपोद्घातः लिखितः।

### उपोद्घातसारः

पण्डितराजेन ताताचार्येण उपोद्घाते प्रागेव उद्यानवृत्तेः प्रयोजनं विलिख्य व्याख्यानकाले जातोऽनुभवोऽपि उपवर्णितः। ततश्च भामहीयस्य काव्यालङ्कारग्रन्थस्य सारं प्रदाय भामहात् प्राचीनग्रन्थकाराणामुल्लेखः विहितः।

अथ च भामहाचार्यस्य **काव्यालङ्कार** इति ग्रन्थस्य नामकरणं कथं सार्थकमिति चर्चा समुपस्थापिता। सर्वश्रुतमेव यत् भरतनाट्यशास्त्रमेकं भामहात् प्राचीनमिति। तत्र हि भरतमुनिः सप्तदशेऽध्याये काव्यबन्धोपयुक्तानंशान् प्रतिपादयति। ते च लक्षणानि, अलङ्काराः, गुणाः दोषाः चेति चतुर्विधाः। **'एतानि वै काव्यभूषणानि'** इत्युक्त्वा भरताचार्यः काव्यबन्धस्य कृते अनिवार्यतत्त्वानि **'भूषणानि'** इति सम्बोधयति। अर्थात् 'भूषणं' नाम गुणालङ्कारात्मकमेव इति भरतमुनेः प्रस्तुतकारिकया अवगम्यते। सा च –

अलङ्कारैर्गुणैश्चैव बहुभिः समलङ्कृतम्।
भूषणैरिव चित्रार्थैस्तद्भूषणमिति स्मृतम्।।

अतः काव्यशोभाकरत्वेन सर्वत्रालङ्कारत्वं स्थितमिति सुस्पष्टम्। अपि चालङ्कारशब्दश्रवणे उपमाद्यलङ्काराणां प्रतीतिरिति सप्रमाणं स्पष्टीकृतमत्र। तथैव

नाट्यशास्त्रे षडलङ्काराः समुपवर्णिताः। ते च उपमाद्यलङ्काराः, पाठ्यालङ्काराः, नेपथ्यालङ्काराः, नाट्यालङ्काराः, प्रयोगालङ्काराः वर्णालङ्काराश्चेति। एवमलङ्कारशब्दस्य बहुसाधारणत्वात् तन्मात्रेण विवक्षितार्थप्रतीतिर्न सेत्स्यतीति विचिन्त्य भामहः **काव्यालङ्कारः** इति स्वग्रन्थस्य नामाभिधानमकरोत्। एवञ्कारं नामकरणेनैव इदमपि प्रत्येतव्यं यदयं काव्यस्य काव्यत्वापादकः प्रधानांशः **'अलङ्कार'** एवेति मन्यते।

तथैव भामहीये काव्यालङ्कारे निरूपितोऽयमंशः भामहकालात् प्राक्तनः उत भामहेन स्वयमवधार्य समुपवर्णित इति सोदाहरणमत्र उपपादितम्। ततश्च क्रमशः प्रथम-द्वितीय-तृतीय-चतुर्थ-पञ्चम-षष्ठानां परिच्छेदानां सारांशेन परामर्शः प्रस्तुतीकृतः। तदनन्तरं शास्त्रान्तराणां साहित्यस्य च सम्बन्धं प्रदर्श्य उपसंहारः विहितोऽस्ति।

## उपोद्घातविशेषाः

### १) उपोद्घातस्य दीर्घता

उद्यानवृत्तेः प्राक् विद्ववरेण ताताचार्येण दीर्घ उपोद्घातः लिखितोऽस्ति। पञ्चषष्टिपृष्ठात्मकोऽयमुपोद्घातः सम्पूर्णस्य **काव्यालङ्कार** इति ग्रन्थस्य सारमेव वर्वर्ति। प्रायशः प्रस्तावनायां ग्रन्थकारः ग्रन्थरचनायाः प्रयोजनं वा ग्रन्थपठनाय मार्गदर्शनं वा ग्रन्थस्य विनियोगकथनं वेति चकार। किन्त्वत्र दीर्घेण उपोद्घातेन शोधनिबन्धस्य स्वरूपमेव लब्धमस्ति। एवमुपोद्घातस्य दीर्घत्वमध्ययनकर्तुः जिज्ञासापूर्ततायै सक्षमं सन्दृश्यते। अपि च अनुसन्धानाय पथप्रदर्शनञ्च विदधाति।

### २) स्वविचाराणां सप्रमाणं समुपस्थापनम्

उद्यानवृत्तेः उपोद्घाते विषयप्रतिपादनाय व्याख्याकर्त्रा ये ये विचाराः समुपस्थापिताः ते सर्वे प्रमाणसहितैव सन्ति। यतः प्रमाणैर्विना प्रतिपादितविषयः तावन्तं प्रभावं न जनयतीति सर्वविदितमेव। व्याख्यानावधौ जातोऽनुभवः कीदृशः? इति ताताचार्यमहोदयः बालनिलयनक्रीडायाः उदाहरणेन कथयामास। यथा लोके बालनिलयनक्रीडां कुर्वन्तः रसमनुभवन्ति तथैव काव्ये कविसहृदया इति

काव्यविमर्शननिपुणा अभिदधति। कविरर्थान् निगूहति। सहृदयस्तानन्विष्य उपलक्ष्य रसयति। एवं विधा निलयनक्रीडा इह भामहग्रन्थे अस्माभिरसकृदन्वभूयदिति। तथैव अलङ्कारास्तु भरतात्पूर्वमपि प्रसिद्धा आसन्निति प्रतिपादयितुं ऋक्संहिता जैमिनीयपूर्वमीमांससूत्रभाष्यान्तर्गता प्राचीनवृत्तिश्च प्रमाणमिति सोदाहरणं स्पष्टयति ताताचार्यः। एवमेव सर्वत्र प्रमाणं प्रदर्श्य आत्मविचारप्रकटीकरणमस्य उपोद्घातस्य वैशिष्ट्यम्।

**३) परिच्छेदानां पर्यालोचनम्**

काव्यालङ्कारस्य परिच्छेदानुसारं कृतं वृत्तिलेखनकर्म कथं स्यादिति ज्ञापयितुम् उपोद्घाते सर्वपरिच्छेदानां परामर्शः विहितोऽस्ति। यथा – प्रथमपरिच्छेदस्य पर्यालोचने शब्दमपि काव्यशरीरतया भामहोऽभिप्रैति इति प्रतीयते। अयमेवाभिप्रायः 'शब्दार्थौ सहितौ काव्यम्' इति भामहस्य काव्यलक्षणेन स्पष्टीभवति। इत्थं प्रतिपरिच्छेदं पर्यालोचनमुपोद्घाते दृष्टिपथमायाति।

**४) व्याख्यानकालस्य अनुभवविवेचनम्**

भामहीयः काव्यालङ्कारः इति ग्रन्थस्य व्याख्यानकाले ताताचार्यैः यदनुभूतं तत्सर्वं तैरुपोद्घाते विवेचितमस्ति। षट्सु वर्षेषु अनुभूतः क्लेशः नाम 'प्राप्तानि दुःखान्यपि दण्डकेषु, सञ्चिन्त्यमानानि सुखान्यभूवन्' इव आसीदिति तेषां मतिः। चतुर्थपरिच्छेदे प्रोक्तः ऋषभात्पञ्चमात्तस्मात् सषड्जं धैवतं स्मृतम् इति कलाविरोधोदाहरणश्लोकस्तु वर्षत्रयं तेषां कृते अभेद्योऽभवत्। तदर्थं सङ्गीतशास्त्रे निपुणानां प्रसिद्धानां केषाञ्चित् मार्गदर्शनमपि स्वीकृतं तैः। परन्तु हृदयस्य तृप्तिः नाभवत्। अन्ते च सङ्गीतरत्नाकरस्य आपाततः अध्ययनेन शङ्का परिहृता। यदारभ्य अस्य ग्रन्थस्य व्याख्यानकरणबुद्धिरजायत तदारभ्य प्रत्यहं काव्यालङ्कारपारायणमकरोत् टीकाकारः। क्वचित् भामहाचार्य अष्टाध्यायाक्रममेव नियामकमाश्रितवान्निति तेषामभिप्रायोऽस्ति। इत्थं स्वानुभवकथनमपि अस्य एकं वैशिष्ट्यम्।

# भामहीयकाव्यालङ्कारस्य प्रथमपरिच्छेदसारांशः

भामहीयकाव्याङ्लकारस्य प्रथमपरिच्छेदे ५९ सङ्ख्यात्मिकाः कारिकाः वर्तन्ते। ग्रन्थादौ मनोवाक्कायकर्मभिः सार्वं सर्वज्ञं प्रणम्य 'काव्यालङ्कार' इति ग्रन्थस्यारम्भमकरोत् भामहाचार्यः। साधुकाव्यनिबन्धनस्य प्रयोजनानि संसूच्य काव्यशास्त्रस्य महत्त्वञ्च प्रतिपादयामास सः। ऋते काव्यशास्त्रात् कविरात्मविदितमाविष्कर्तुं नैव क्षमते इति ज्ञापयितुमुदाहरणानि प्रायच्छत् भामहः। यथा विजयेन विना श्रीः, शशिना विना निशा न शोभते तथैव सत्कवित्वेन रहिता वाग्विदग्धता। सर्वदा विविधशास्त्रेभ्यः काव्यमतिरिच्यते कारणविशेषात्। गुरूपदेशात् जडधियोऽपि शास्त्रज्ञानं सम्पादयितुमर्हः। किन्तु विना प्रतिभां काव्यनिर्मितिः नैव शक्या इत्युक्त्वा काव्यनिर्माणे प्रतिभा एव प्रामुख्यं भजते इति भामहाचार्यमतिः। काव्यस्योपादेयत्वं नाम काव्यमयं वपुः निरपायमेव चिरमास्ते। तेन हि कविसंस्काराय शब्दच्छन्दोऽभिधानार्था इतिहासाश्रयाः कथाः, लोकव्यवहाराः कलाश्च वेदितव्याः। यतः कुपुत्र इव कुकाव्यं सर्वथा निन्दनीयं भवति। वस्तुतस्तु विद्वांसः कुकवित्वं मरणमित्याहुः।

ततश्च भाववादी तथा च सौशब्दवादी इत्यालङ्कारिकाणां वर्गद्वयं प्रतिपाद्य स्वकीयं मतं तत्रोपन्यस्तं भामहेन। 'शब्दार्थौ सहितौ काव्यमि'ति काव्यलक्षणं विधाय काव्यविभागं प्रादर्शयत् सः। तत्र ह्यादौ –

- वर्णनियमरूपच्छन्दस्सदसद्भावाभ्यां गद्यं पद्यञ्चेति द्विधा विभागः।
- शब्दमाधारीकृत्य संस्कृतं, प्राकृतम् अपभ्रंश इति त्रिधा विभाजनम्।
- वर्ण्यविषयमवलम्ब्यदेवादिचरितम्, उत्पाद्यं, कलाश्रयं शास्त्राश्रयं चेति चतुर्धा।
- सन्दर्भाल्पमहत्त्वादिपर्यवसायिकविव्यापारवैलक्षण्यात् सर्गबन्धः, अभिनेयार्थम्, आख्यायिका, कथा अनिबद्धं चेति पञ्चधा विभागः।

अथ च सर्वकाव्यविभागानां लक्षणानि समुपवर्ण्य गौडीयं वैदर्भमिति काव्यबन्धरीत्योः भेदखण्डनं विहितम्। भामहमतेन वाचामलङ्कृतिः

वक्राभिधेयशब्दोक्तिरिष्टा। तस्मादेव नेयार्थं, क्लिष्टम्, अन्यार्थम्, अवाचकम्, अयुक्तिमत् गूढशब्दाभिधानञ्चेति वक्राभिधेयोक्तिदोषषट्कं सलक्षणं सोदाहरणञ्च विवेचितम्। ततश्च श्रुतिदुष्टः, अर्थदुष्टः, कल्पनादुष्टः श्रुतिकष्टश्चेति चतुर्विधं शब्ददोषमुक्त्वा सर्वेषां निराकरणमावश्यकमित्यपि प्रतिपादितम्। कदाचित्तु सन्निवेशविशेषात् वा आश्रयसौन्दर्यात् वा दोषस्य दोषत्वं नैव गण्यते इत्यपि उदाहरणेन सह स्पष्टीकृतमस्ति। यथा मालाकारः साधु मालां रचयति तथा काव्येषु सावधानतया सुयोग्यशब्दान् प्रयुज्य काव्यनिर्मितिः विधातव्येति परिच्छेदान्ते विनिवेदयति भामहाचार्यः।

## प्रथमपरिच्छेदस्य उद्यानवृत्तिपरामर्शः

'पण्णातटपरिष्कारपारिजातफलायिता एषा मे वृत्तिः' इति स्वकीये मङ्गलाचरणे प्रतिपाद्य काव्यालङ्कारस्य मङ्गलश्लोकव्याख्यानमारभत् पण्डितराजः ताताचार्यमहोदयः। तत्र हि 'मनोवाक्कायकर्मभिः' इत्यस्य अनुसन्धानात्मना मानसे शब्दोच्चारणरूपेण वाचिकेन अञ्जलिबन्धदण्डवत्प्रणामादिना कायिकेन च कर्मणा इति स्पष्टीकरणं विदधाति टीकाकारः। तथैव सार्वं सर्वज्ञम् इत्यस्य यः सर्वज्ञः सर्ववित् इत्युपनिषत्सु श्रुतं परमपुरुषं भामहाचार्यः प्रणमतीति विवेचयति। अपि च प्रणम्य सार्वं सर्वज्ञम् इत्यत्र प्रणम्य शर्वं सर्वज्ञम् इत्यपि पाठः परिलक्ष्यते क्वचित् तदा सर्वज्ञं शर्वम् इति अन्वयः स्यादिति तस्याभिप्रायः।

वृत्तौ ननु किमस्य ग्रन्थस्य फलम् इति पूर्वपक्षीयशङ्कां समुपस्थाप्य समाधाने उत्तरं ददाति। एवमेव शङ्का-समाधानरीतिः सम्पूर्णवृत्तिग्रन्थेऽवलोक्यते अस्माभिः।

'काव्यं तु जायते जातु कस्यचित् प्रतिभावतः'(१/५) इत्यनेन भामहाचार्यः काव्यनिर्माणे प्रतिभा एव मूलकारणमिति ज्ञापयति। वाक्यस्यास्य व्याख्याने ताताचार्यवर्येण प्रतिभायाः लक्षणं वेदयितुमन्यग्रन्थामाधारः स्वीकृतः। अपि च

'स्मृतिर्व्यतीतविषया मतिरागामिगोचरा। बुद्धिस्तात्कालिकी प्रोक्ता प्रज्ञा त्रैकालिकी मता। प्रज्ञा नवनवोन्मेषशालिनीं प्रतिभां विदुः' इति प्रतिपादितम्। तथैव के कुकवयः? इति सूचयितुं तत्राहु इत्यनेन प्रमाणं यच्छति यत् –

गणयन्ति नापशब्दं न वृत्तभङ्गं क्षयं न वाऽर्थस्य
रसिकत्वेनाकुलिता वेश्यापतयः कुकवयश्च।। इति। (१/१२)

एवमेव यद्यपि सप्रमाणं विवेचनं तथापि सर्वत्र न प्रमाणसन्दर्भः प्रदत्तः। यत्र प्रमाणसन्दर्भे सन्देहः तत्र व्याख्याकारः 'तत्राहुः' इत्यनेन पदेन प्रमाणं यच्छति। तथा च यत्र प्रमाणनिर्णयः तत्रालङ्कारिकाणां वा ग्रन्थानां वा नामनिर्देशः दृष्टिगोचरीभवति। यथा काव्यविभागविवरणे हेमचन्द्र आह – 'नायकाख्यातस्ववृत्ता भाव्यर्थशंसिवक्रादिः सोच्छवासा संस्कृता गद्ययुक्ताऽऽख्यायिके'ति (१/२५)। अथवा 'न वक्त्रापरवक्त्राभ्यामित्यादिविशेषप्रतिषेधात् इतरप्राप्त्या गद्ययुक्ता कथे'ति दण्डी। 'प्रतिषेधस्येव नियमस्याप्यकरणात् गद्येन पद्येन वे'ति हेमचन्द्रः (१/२९) इति। तदुक्तं भगवता वेङ्कटनाथेन श्रीन्यायपरिशुद्धौ – 'सा द्विधा वीतरागकथा विजिगीषुकथा चेति' (१/३६ ) इति। इत्थं कुन्तकः, दण्डी, हेमचन्द्रश्च इत्यादिनां नामोल्लेखं वृत्तिकारः अकरोत्।

कुत्रचित् सन्दर्भमनुसृत्य इतिहासकथाः प्रस्तुतास्सन्ति। यथा हि – 'यस्य कवेः सान्तं काव्यमयं वपुः तस्य कीर्तिरनश्वरी' इति वर्णने भामहाचार्यः 'किले'ति अव्ययं प्रयुङ्क्ते। तदव्ययमितिहाससिद्धमावेदयतीति स्वमतं दृढीकर्तुम् इतिहासस्योदाहरणं टीकाकारः प्रस्तौति।

परिच्छेदस्य व्याख्याने वृत्तिकारस्य काव्यप्रतिभा अपि दृग्गोचरा भवति। वैदर्भं गौडियमिति भेदं प्रदर्शयितुं पञ्चदशश्लोका एव रचितास्सन्ति पण्डितराजेन ताताचार्यशिरोमणिना। काव्यदोषविवेचने प्रदत्तानि उदाहरणानि ताताचार्यमहाशयस्य पाण्डित्यमेव प्रकटीकुर्वन्ति। यथा क्लिष्टान्यार्थदोषस्य उदाहरणम् – 'विजह्रुस्तस्य ताः शोकं क्रीडायां विकृतं च तत्' (१/४०)। अत्र विजह्रुरिति जह्रुरित्यर्थो। कर्मनिर्देशात्। सोऽयमर्थो वाक्यप्रमाणकः।

पदान्तरसमभिव्याहारसापेक्षप्रतीतिकत्वात्। ततः पूर्वन्तु विपूर्वस्य हरतेः क्रीडार्थत्वात् पदश्रुत्येव क्रीडाप्रत्यय भवति । तेनेह वाच्यवाचकयोर्व्यवधानात् क्लिष्टत्वमिति।

'मन्तव्या काव्यवैखरी' (१/९) इत्यस्य स्थाने उत्तुङ्गोदयस्य लोचनव्याख्यायां 'मन्तव्या काव्यहेतवः' इति पाठः। अनिबद्धम् (१/१८) इत्यत्र अनिबन्धम् इति पाठः कुत्रचिदुपलभ्यते इत्यनेन व्याख्याकारस्य गवेषणरीतिः वा निरीक्षणशक्तिर्वा अवगम्यते।

क्वचित् भामहकारिकायाः लीलया अवगमनात् सुबोधात् वा अभिधेयमर्थः इत्युल्लेखः, न तु तस्य व्याख्या। परिच्छेदान्ते मङ्गलश्लोकेन उद्यानवृत्तेः उपसंहारोऽपि विहित इति वैशिष्ट्यम्।

**द्वितीयपरिच्छेदसारांशः**

परिच्छेदेऽस्मिन् ९६ परिमिताः कारिकाः भामहाचार्येण अन्तर्भूताः। अत्र ह्यादौ माधुर्यप्रसादौजगुणाः सोदाहरणं विवेचिताः। ततः पञ्च वाचामलङ्काराः परिगणिताः। तन्मध्ये अनुप्रासः, सयमकः, रूपकं, दीपकम् उपमा चेति सन्ति। तदनन्तरं 'सरूपवर्णविन्यासमनुप्रासं प्रचक्षते' इति अनुप्रासलक्षणं प्रदाय ग्राम्यनुप्रास लाटानुप्रासश्चेति प्रकारद्वयं सोदाहरणं न्यरूपयत्। आदियमकं, मध्यान्तयमकं, पादाभ्यासयमकम्, आवलीयमकं तथा च समस्तपादयमकमिति पञ्चधा यमकालङ्कारः एतेषां समेषां क्रमेणोदाहरणानि वर्णयित्वा यमकस्वरूपं वैशिष्ट्यञ्च प्रोक्तम्। अपि च पञ्चसु सन्दष्टकसमुद्गादेः अन्तर्भाव इति मतमत्र समुपस्थापितम्।

ततश्च रूपकलक्षणं प्रतिपाद्य समस्तवस्तुविषयरूपकम् एकदेशविवर्ति रूपकञ्चेति द्विधा विभाजनं प्रदर्शितम्। उदाहरणैस्सह तेषां सर्वेषां विवरणं कृत्वा दीपकालङ्कारस्य स्वरूपं निर्दिष्टम्। अस्यैव आदिदीपकं, मध्यदीपकम् अन्तदीपकञ्चेति भेदत्रयमुक्तवान् भामहः। तस्मादनन्तरम् उपमालङ्कारस्य लक्षणेन सह सादृश्यवाचकशब्दश्रवणाश्रवणाभ्यां द्वेधा विभागः दर्शितः। अपि च

प्रतिवस्तूपमा, मालोपमादिनाम् अन्तर्भाव उपमालङ्कारस्य भागद्वये एवास्ति इत्यपि तेन कथितम्। हीनता, असम्भवः, लिङ्भेदः, वचनभेदः, विपर्ययः, उपमानाधिकत्वं तथा चोपमानासादृश्यमेते सप्त उपमादोषाः सोदाहरणं सलक्षणञ्च उपवर्णिताः।

वक्ष्यमाणविषय उक्तविषयश्चेति आक्षेपालङ्कारः द्विधा इत्युक्त्वा तयोः उदाहरणं प्रदत्तम्। ततश्च अर्थान्तरन्यासः, व्यतिरेकः, विभावना, समासोक्तिः, अतिशयोक्तिः, वक्रोक्तिः, यथासङ्ख्यम्, उत्प्रेक्षा स्वभावोक्ति इत्यलङ्काराः सलक्षणं सोदाहरणञ्चात्र प्रस्तूताः।

परिच्छेदान्ते 'स्वयङ्कृतैरेव निदर्शनैरियं वागलङ्कृतिः मया निरूपिता' इति प्रतिपाद्य उपसंहारः कृतोऽस्ति।

## द्वितीयपरिच्छेदस्य उद्यानवृत्तिपरामर्शः

द्वितीयपरिच्छेदस्य व्याख्यानात्प्राक् मङ्गलं कृत्वा पूर्वपीठिका वृत्तिकारेण महामहोपाध्यायेन ताताचार्यवर्येण प्रस्तूता। तत्र हि प्रथमपरिच्छेदे काव्यशरीरं प्रतिपाद्य तस्य शोभायै पदपदार्थसम्बन्धिनः दोषाः समुपस्थापिताः। अधुना काव्यशोभायै गुणापरपर्याया अलङ्काराः निरूप्यन्ते इति संसूचितम्। भामहाचार्येण कुत्रापि 'गुण' इति पदस्य प्रयोगः न कृतः इत्यस्मात् ताताचार्योऽपि काव्यबन्धेषु नियतरूपेण स्थिताः नियमाः यैर्विना अलङ्काररहितोऽपि काव्यबन्धः शोभते, अन्यच्च एते एव नियमाः विशेषेण **गुण** इति व्यवहारव्यवस्थायाम् अर्वाचीनेषु मन्यन्ते इति न्यवेदयत्। ततश्च माधुर्यं प्रसाद इत्यनयोः व्याख्यां प्रदाय विभिन्नकाव्येभ्य उदाहरणानि तेनेह प्रस्तूतानि। यथा हि प्रसादगुणवर्णने कालिदासविरचितकाव्यादिदमुदाहरणम् -

एतावदुक्त्वा प्रतियातुकामं शिष्यं महर्षेर्नृपतिनिर्षिध्य।
किं वस्तु विद्वन्! गुरवे प्रदेयं त्वया कियद्वेति तमन्वयुङ्क्त ॥

(रघुवंशम् – ५/१८)

ततश्च यमकालङ्कारविवेचने 'यमौ द्वौ सहजातौ तत्प्रतिकृति यमकमि'ति हेमचन्द्रः इति संसूच्य कथं यमकालङ्कारः पञ्चधोच्यते? इति शङ्कां

समुपस्थापयति। यतो हि सन्दष्टकसमुद्गादीनां यमकान्तराणामपि सत्त्वात्। एतद्विस्तरो रुद्रटे इति प्रमाणञ्च प्रदर्शयति टीकाकारः। अपि चादौ मध्ये अन्ते चेति त्रीणि, पादाभ्यासादीनि त्रीणीति षड्विधत्वं भवतैव प्रतिपाद्यते तत्कथं पञ्चधेति प्रश्नेन जिज्ञासां समुत्पाद्य भामहस्य श्लोकस्यावतारणं विदधाति ताताचार्यमहाशयः। अथ च मध्यान्तयमकस्य उदाहरणटीकायां के क्लेशाः इति सन्देहनिवारणाय पातञ्जलोक्तान् अविद्या, अस्मिता, रागः, द्वेषः अभिनिवेशरूपान् पञ्चक्लेशान् निरूपयति व्याख्याकारः। कुत्रचित् अमरकोशस्य सन्दर्भं प्रदाय निजमतं कथमुचितमिति बोधयति। यथा अन्तदीपकस्योदाहरणे दृष्टिगोचरतां गतं 'चीरी' इति पदम् अदृश्यदेहस्तीव्रविरावी जन्तुविशेषः इत्यस्मिन्नर्थे विराजते इति स्पष्टयितुं 'भृङ्गारी चीरुका चीरी झिल्लिका च समा इमा इत्यमरः' इति प्रमाणयति।

अथ चातिशयोक्त्यलङ्कारविवरणप्रसङ्गे 'सैषा सर्वैव वक्रोक्तिरनयाऽर्थो विभाव्यते। यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना' इति भामहाशयः कथं युक्तः इति प्रमाणयितुं ताताचार्यवर्यः आनन्दवर्धनस्य ध्वन्यालोकात् वाक्यानि उल्लिखति यत् 'प्रथमं तावदतिशयोक्तिगर्भता सर्वालङ्कारेषु शक्यक्रिया। कृतैव च सा महाकविभिः कामपि काव्यच्छायां पुष्यती'ति। कथं ह्यातिशययोगिता स्वविषयौचित्येन क्रियमाणा सती काव्ये नोत्कर्षमावहेत्। अतः भामहेनाप्यतिशयलक्षणे यदुक्तं सैषा सर्वैविति तत्रातिशयोक्तिर्यमलङ्कारमधितिष्ठति कविप्रतिभावशात् तस्य चारुत्वातिशययोगः अन्यस्यालङ्कारमात्रतैवेति सर्वालङ्कारशरीरस्वीकरणयोग्यत्वेनाभेदोपचारात् सैव सर्वालङ्काररूपेत्ययमेवार्थोऽवगन्तव्यः इति। तथैव '**अतिशयोक्तिः सर्वोऽलङ्कार** इति वचनात् अतिशयोक्तिविशेषा एव सर्वेऽन्ये अलङ्काराः इति केचिदाचक्षीरन्' इत्यनेन मतभेदमुपस्थाप्य तेषां खण्डनायापि प्रयतते व्याख्याकारोऽत्र।

ततः परिच्छेदान्ते च मङ्गलं विधाय उद्यानवृत्तेः समाप्तिं करोति टीकाकारोऽयम्।

## तृतीयपरिच्छेदसारांशः

भामहीयकाव्यालङ्कारस्य तृतीयपरिच्छेदे ५८ परिमिताः कारिकास्सन्ति। तत्र त्रयोविंशतिरलङ्काराः सलक्षणं सोदाहरणञ्च निरूपिताः। ते च प्रेयः, रसवत्, ऊर्जस्वि, पर्यायोक्तम्, समाहितम्, उदात्तम्, श्लिष्टम्, अपह्नुतिः, विशेषोक्तिः, विरोधः, तुल्ययोगिता, अप्रस्तुतप्रशंसा, व्याजस्तुतिः,निर्दशना, उपमारूपकम्, उपमेयोपमा, सहोक्तिः, परिवृत्तिः, ससन्देहः, अनन्वयः, उत्प्रेक्षावयवः, संसृष्टिः, भाविकम्, आशी इत्यादयः। अन्तिमे च 'मया स्वयं धिया विनिश्चित्य गिरामलङ्कारविधिः सविस्तरः उदितः' इत्यनेन उपसंहृतः परिच्छेदः।

## तृतीयपरिच्छेदस्य उद्यानवृत्तिपरामर्शः

तृतीयपरिच्छेदस्य उद्यानवृत्तिः प्रस्तुतमङ्गलाचरणेनारब्धा।

उपसन्नः प्रयात्यारादुदासीनमुपैति माम्।
न शृणोत्युक्तमागत्य स्मयमानः प्रभाषते।।

विषमालङ्कारसहितं मङ्गलाचरणमिदम् अलङ्कारविवरणमेव परिच्छेदस्यास्य उद्दिष्टमिति संसूचयति। अत्र हि त्रयोविंशतिः अलङ्काराः तेषामुद्देशाः च वर्णिताः। प्रत्येकमलङ्कारः उदाहरणेन सह समुपवर्णितः। क्वचित् अन्यालङ्कारिणां लक्षणानि प्रदाय निजटीकां न केवलं प्रभावयुक्ताम् अपि तु सुस्पष्टामकरोत् पण्डितराजताताचार्यः। यथा समाहितमिति अलङ्कारस्योदाहरणप्रसङ्गे व्याख्याकारः ताताचार्यः दण्डिनः लक्षणमपि समुपस्थापयति। तद्यथा -

किञ्चिदारभमाणस्य कार्यं दैववशात् पुनः।
तत्साधनसमापत्तिर्या तदाहुः समाहितम्।। इति।

ततश्चोदाहरणस्यार्थः सविस्तरं विवृतः। तथैव उदात्तालङ्कारसन्दर्भे महाकविभामहेन 'विभूतेर्महत्त्वं तदुदात्तमिति तु केचित्' इत्युक्त्वा अन्येषां मतं निर्दिष्टम्। तदैव इदममृष्यमाण आह दण्डिः -

पूर्वत्राशयमाहात्म्यमत्राभ्युदयगौरवम्।
सुव्यञ्जितमिति प्रोक्तमुदात्तद्वयमप्यदः।।

इत्यनेन दण्डिनः अभिप्रायः कथितः। अपि च 'आशयमहत्त्वव्यञ्जनादिति चेदत्रापि विभूतिमहत्त्वव्यञ्जनादिति तुल्यमि'ति प्रतिपादितम्। उपमायुक्ते श्लिष्टविश्लेषणे 'स धर्मेषु तन्त्रप्रयोगे श्लेष' इति वामनाचार्यमतमुपपाद्य 'स अभेदारोपः। धर्मेषु गुणक्रियाशब्दरूपेषु। तन्त्रप्रयोगे तन्त्रेणोच्चारणे सति' व्याख्यातमत्र। सुबोधव्याख्या कथं स्यादिति ज्ञातव्यं चेत् हेतुनिर्देशयुक्तं श्लिष्टं कथं भवेदित्यत्र भामहाचार्येण इदमुदाहरणं प्रोक्तम्-

रत्नवत्त्वादगाधत्वात् स्वमर्यादाऽविलङ्घनात्।
बहुसत्त्वाश्रयत्वाच्च सदृशस्त्वमुदन्वता॥

ताताचार्य अस्य व्याख्यामित्थं विदधाति यत् रत्नवत्त्वं तदाकरत्वं तत्स्वामित्वञ्च। अगाधत्वं गाधभिन्नत्वं हृदयगाम्भीर्यञ्च। मर्यादा वेला लोकशास्त्रनियमश्च। एकत्र सत्त्वाः यादांसि अपरञ्च सत्त्वं बलम्। अत्र मर्यादाऽविलङ्घनक्रिया। अन्ये गुणाः। पञ्चम्यन्तत्वाद्हेतुनिर्देशवदिदं श्लिष्टमिति। अनेन ताताचार्यस्य प्रतिपादनशैलीवैशिष्ट्यमवगम्यते।

प्रायः दण्डिश्लोकाः व्याख्याकारेण बहुत्र उदाहृतास्सन्ति। अनेनावगम्यते यत् टीकाकारेण ताताचार्येण महाकविदण्डिनः ग्रन्थाभ्यासः गहनतया कृत इति। उद्यानवृत्तेः अन्ते स्वरचितमङ्गलाचरणं विलिख्य तृतीयपरिच्छेदः समाप्तिं नीतः।

## चतुर्थपरिच्छेदसारांशः

५१ कारिकाभिः द्वितीये तृतीये च परिच्छेदे काव्यशोभाहेतुरलङ्काराः भामहाचार्येण निबद्धाः। सम्प्रत्यस्मिन् परिच्छेदे काव्याशोभाहेतुभूतान् दोषान् परिच्छेद्वयेन न्यरूपयत् सः। आदौ कारिकाद्वये केषां दोषाणां विवरणमत्र विधास्यते इत्युल्लिखितम्।ततश्च तेषामुदाहरणं प्रदाय विवेचनं कृतमस्ति। तत्र हि अपार्थम्, व्यर्थम्, एकार्थम्, ससंशयम्, अपक्रमम्, शब्दहीनं, यतिभ्रष्टम्, भिन्नवृत्तम्, विसन्धिः, देशविरोधिः, कालविरोधिः, कलाविरोधिः, लोकविरोधिः, न्यायविरोधिः आगमविरोधिः चेत्यादयः काव्यदोषाः क्रमशः विशेषतया निरूपितास्सन्ति। अपार्थमिति काव्यदोषस्य विवेचनसन्दर्भे भामहाचार्यः सौगतानामपि मतं

प्रत्यपादयत्। तथा च एकार्थम् इति दोषवर्णने निजाभिप्रायमपि समुपस्थापयति सः। सर्वेषां दोषाणां यथावदुदाहरणानि प्रदाय अन्तिमे अप्रौढानालङ्कारिकान् प्रतिबोधयन् 'न दूषणायायमुदाहृतो विधिर्न चाभिमानेन किमु प्रतीयते। कृतात्मनां तत्त्वदृशां च मादृशो जनोऽभिसन्धिं क इवावभोत्स्यते' इत्यनेन उपसंहरति परिच्छेदोऽयम् भामहाचार्यः।

## चतुर्थपरिच्छेदस्य उद्यानवृत्तिपरामर्शः

'अहं नमामि स्तौमि याचामि तथापि न किञ्चिदनुकम्पते। किन्तु, समये सर्वमात्मनः सम्पन्नं पश्यामी'ति ईशस्तवनेन ताताचार्येण उद्यानवृत्तिः प्रारब्धा। अत्र हि विहितः 'याचामि' इति क्रियापदप्रयोगः विरलतया परिलक्ष्यते वाङ्मये।

भामहाचार्यः 'अपार्थम्' इति काव्यदोषस्य विवक्षितविवेकाय आदौ अपार्यस्य अर्थमुक्त्वा सः पदवाक्यरूपेण द्विधेति कारिकायां विवेचयति। ततश्च पदवाक्ययोः व्याख्यानं विदधाति। तदनुसृत्य व्याख्याकारः ताताचार्यः अतीव सरलया शैल्या सम्पूर्णकारिकायाः सविस्तरं व्याख्यां विधाय उदाहरणान्यपि प्रयच्छति। व्याख्यानप्रसङ्गे कारिकायाः प्रत्येकं पदस्य स्पष्टीकरणं प्रदाय भामहाचार्यस्य कारिकावगमनकाठिन्यं व्याख्याकारेण दूरीकृतमस्ति। यथा अर्थवान् वर्णसङ्गातः इत्यस्मिन् विषये कदाचित् पठितॄणां सम्भ्रमः वा शङ्का वा उत्पद्येदिति विचिन्त्य भामहाचार्यः तस्य समाधानमकरोत् यत् –

क्रमवृत्तिषु वर्णेषु संघातादि न युज्यते।
बुद्धौ तु सम्भवत्येतदन्यत्वेऽपि प्रतिक्षणम्॥ (भा. का. -४/५)

अस्य व्याख्यानं ताताचार्यः प्रस्तुतवाक्यैः अकरोत्। 'यदुक्तं वर्णसंघातः पदम्, तत्संघातो वाक्यमिति तन्न युज्येत। कस्मात्? यस्मात् क्रमवृत्तयोः वर्णाः। क्रमेण हि वर्णा उच्चार्यन्ते। यथा गौरित्यत्र गकारौकारविसर्जनीयाः। तेषां कथं संघातसम्भवः?

संघातो हि नाम युगपद्वर्तमानता। स कथं क्रमवर्तिनां सम्भवेत्? ननु प्रथमोच्चारितो गकारो यावत् विसर्जनीयोच्चारणमवतिष्ठते। एवमौकारोऽपि।

अथोच्चारिते विसर्जनीये पूर्वयोरपि वर्णयोः सत्त्वात् त्रयोऽपि युगपद्वर्तिन इति कथं संघातासम्भवः। उच्यते। क्षणिका हि वर्णा इष्यन्ते, न स्थिराः। अन्यथा सकृदुच्चारिता अवरितं श्रूयेरन्। क्षणिकाश्च सन्तो न वर्णान्तरोच्चारणपर्यन्तमवतिष्ठन्त इति। एवं संघातस्यासम्भवे अर्थप्रत्यायकत्वमपि न संभवति। ज्ञातं हि सत् पदं वा वाक्यं वा अर्थं प्रत्याययेत्। तत्र वर्णसंघातात्मनः परस्यैवाभावे कथं तस्य ज्ञानं, कथन्तरामर्थप्रत्यायकत्वमिति। तदिदमुक्तं संघातादीति। एवं शङ्कायां समाधानमुच्यते। यद्यप्युक्तरीत्या वर्णानां प्रतिक्षणमन्यत्वं तथाऽपि तु एतत् संघातादिबुद्धौ सम्भवति, एकबुद्ध्युपारूढा सन्तः संहता अर्थप्रत्यायकाश्च भवन्ती'ति।

इत्थं भामहाचार्येण द्विविधोऽर्थो दर्शितः पदार्थो वाक्यार्थ चेति। किन्तु तृतीयोऽप्यर्थोऽस्ति वाक्यसमुदायार्थ इति ताताचार्यशिरोमणिः सूचयति। तस्योदाहरणमपि प्रयच्छति सः।

परिच्छेदेऽस्मिन् व्याख्याकारस्य व्याकरणज्ञानमपि अवलोक्यते अस्माभिः। व्याकरणसूत्राणि उपयुज्य निजव्याख्यां प्रभावयुक्तां विधातुं प्रयतते टीकाकारः ताताचार्यः। यथा शब्दहीनम् इति काव्यदोषस्य लक्षणं विलिख्य प्रदत्तमिदमुदाहरणम् –

स्फुरत्तटिद्वलयनो विततामभोगरीयसः।
तेजस्तिरयतः सौरं घनान् पश्य दिवोऽभितः।। (भा. का. - ४/२३)

अस्य व्याख्यानविवेचने उल्लिखितम् – अत्र 'स्फुरत्तटिद्वलयान्' इति बहुव्रीहिणा भाव्यम्। न तु स्फुरन्ति च तानि तटिद्वलयानीति कर्मधारयोत्तरं मतुबर्थेन इनिप्रत्ययेन। यदाहुः – 'नः कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत् तत्प्रतिपत्तिकरः' इति। 'वर्णो वर्णेन' इति सूत्रे महाभाष्यपर्यालोचनया चेदम् अवगम्यते। सर्वधनी बाहुवलीत्यादावेव क्वचित् कर्मधारयादीनि वार्तिककारोऽनुशास्ति।अत एव 'हंसचिह्नदुकूलवान्' इति महाकविप्रयोगोऽपि प्रौढिमात्रेण समाधेयः। तथा गरीयस इतीयसुन्नसाधुः। 'द्विवचनविभज्योपपदे तरवीयसुनौ' इति द्वयोरेकस्यान्यस्मादतिशये विवक्षिते हि तरवीयसुनोरनुशासनम्। न चात्रातिशयप्रतियोगि किमपि

शब्देनोपादीयते, अर्थेन वा लभ्यते। बहुगुरुत्वमात्रं ह्यत्र वक्तुमिष्यते नापेक्षिकातिशयशालि गुरुत्वम्। तस्मादिह ईयसुन्नसाधुः। तथा तिरयत इत्ययुक्तम्। तिर्यक्शब्दान् करोतीत्यर्थे णिचि लटः शतृप्रत्यये द्वितीयाबहुवचने तिरायय‍त इति रूपात्। तिरःशब्दात् कण्ड्वादित्वात् 'यकि' तिरस्यत इति रूपात्। यदि तु तिर्यगर्थात्तिरःशब्दादेवेह णिच् क्रियते तर्हि नायं शब्दोऽसाधुरिति ध्येयम्। तथा 'दिवोऽभित' इति षष्ठ्यन्तमसाधु। 'अभितःपरितःसमयानिकषाहाप्रतियोगेऽपि' इति वार्तिककृता द्वितीयाया अनुशासनादिति।

क्वचित्तु शब्दव्युत्पत्तिरपि प्रदाय टीकायाः सुबोधत्वं संवर्धितमस्ति ताताचार्येण। यथा 'कला' इत्यस्य पदस्य व्युत्पत्तिः – 'कलयति लोकशास्त्रावेक्षणेन चराचरात्मकस्य जगतः सुखदुःखानुषङ्गितां संकलय्य गृह्णाति' इति 'कला' विलक्षणा प्रज्ञेति। तथैव नीयते व्युपाद्यते अनेनेति न्यायः शास्त्रम्। एवं न्यायपदस्य व्युत्पत्तिः।

पण्डितराजः ताताचार्यशिरोमणिः सङ्गीतरत्नाकरः इति ग्रन्थस्य गहनाध्ययनमकरोत् इत्यस्य प्रमाणमपि अस्मिन्नैव परिच्छेदे सम्प्राप्यते। अत्र हि कलाविरोधि इति दोषस्योदाहरणव्याख्याने सङ्गीतनैपुण्यमवगम्यते तस्य महोदयस्य।

ऋषभात् पञ्चमस्तस्मात् सषट्जं धैवतं स्मृतम्।
अयं हि मध्यमग्रामो मध्यमोत्पीडितर्षभः।। (भा. का. ४/३४)

अस्य टीकायां षड्जर्षभगान्धारमध्यमपञ्चमधैवतनिषादाः तावत् सप्त स्वराणामुल्लेखोऽस्ति। एष्वेकैकोऽपि अनेकश्रुत्यारब्धः। श्रुतिस्वरयोः भेदविषये पञ्चपक्षास्सन्ति।

- श्रवणैकेन्द्रियग्राह्यत्वाद्विशेषस्पर्शशून्ययोः स्वरश्रुत्योर्जातिव्यक्त्योरिव तादात्म्यमिति।
- दर्पणे मुखविवर्तवच्छ्रुतिषु स्वरा विवर्तन्ते इति।
- यथा घटस्य मृत्पिण्डदण्डः कार्यत्वं तथा स्वराणां श्रुतिकार्यत्वमिति।
- क्षीरं दधिरूपेणेव श्रुतयः स्वररूपेण परिणमन्ते इति।

➢ प्रदीपादन्धकारस्थितघटाद्यव्यक्तिवच्छ्रुतिभ्यः स्वराणामभिव्यक्तिरिति।

इमे पञ्चपक्षाः क्रमेण मीमांसाव्याकरणसाङ्ख्यवेदान्तालङ्कारिकमतं द्योतयन्ति।

ततश्च सङ्गीतशास्त्रे समुपलब्धमानां स्वरसाधारणविधिस्थितिं वर्णयति विवरणकारः ताताचार्यः। तद्यथा - क्रमेण सप्तानां स्वराणां चतस्रः तिस्रः द्वे, चतस्रः चतस्रः तिस्रः द्वे इत्येवंसङ्ख्याः श्रुतयः। कदाचित्तु अन्तिमो निषादः आद्यस्य षड्जस्य द्वे श्रुती संश्रित्य चतुःश्रुतिर्भवति। तदानीं तस्य काकलीसंज्ञा। एवं कदाचित् तृतीयो गान्धारः चतुर्थस्य मध्यमस्य द्वे श्रुती संश्रित्य चतुःश्रुतिर्भवति। तदा तस्य अन्तरसंज्ञा। एषां स्वराणां समूहो ग्राम इत्युच्यते। विकारलेशेनापि वर्जितोऽयं सप्तस्वरसमूहः 'षड्जग्राम' इत्याख्यायते। यदा तु पञ्चमः त्रिश्रुतिर्भवति धैवतश्च पञ्चमस्य चतुर्थी श्रुतिमाक्रम्य चतुःश्रुति तदा 'मध्यमग्रामो' भवति। अत्र ग्रामद्वये साधारणविधिः इति प्रकारान्तरमप्यस्ति। षड्जस्वरसम्बन्धिनीषु चतसृषु श्रुतिषु आद्यां निषादः अन्त्यां ऋषभश्च यदि संश्रयति तदा षड्जस्य पूर्वोत्तरस्वरसाधारण्यात् षड्जसाधारणं भवति। एवं मध्यमस्य आद्यान्त्ये श्रुति यदि गान्धारपञ्चमौ श्रयतः तदा मध्यमसाधारणमिति ज्ञेयम्। एवमेव पूर्वोक्तकाकल्याः शुद्धषड्जनिषादोभयसम्बन्धित्वात् अन्तरस्य शुद्धगान्धारमध्यमोभयसम्बन्धित्वाच्च काकलीसाधारणमन्तरसाधारणमित्यपि द्वे साधारणे भवतः। आहत्य स्वरसाधारणं चतुर्विधम्। तदुक्तम् -

स्वरसाधारणं तत्र चतुर्धा परिकीर्तितम्।
काकल्यन्तरषड्जैश्च मध्यमेन विशेषणात्।। इति।

तत्र काकल्यन्तरसाधारणयोः प्रयोगेऽस्ति विशेषः। काकलीसाधारणे षड्जमुच्चार्य काकलीधैवतौ क्रमादुच्चारयेत्। यद्वा षड्जं काकलीं पुनः षड्जं चोच्चारयेत्। ततःपरं तत्सन्निहितं स्वरान्तरम्। एवमन्तरसाधारणे मध्यमः अन्तरः ऋषभः इति मध्यमः अन्तरः पुनर्मध्यम इति वा क्रमेणोच्चार्य ततःपरं तत्सन्निहितं स्वरान्तरमिति।

इत्थं यत्र व्याख्याविशेषः आवश्यकः तत्र तस्योल्लेखं कृत्वा विवेचनकारः ताताचार्यः प्रतिपाद्यविषयस्य काठिन्यं निवारयति। परिच्छेदान्ते 'इच्छाम्यकर्तुं न च पारयामि, कर्ता किमेषोऽस्म्युत कश्चिदन्यः' इत्यनेन आत्मीयां विनयशीलतामेव प्रदर्शयति ताताचार्यः।

**पञ्चमपरिच्छेदसारांशः**

चतुर्थे परिच्छेदे पदवाक्यगोचराः केचन दोषाः कथिताः। अत्र च प्रबन्धसामान्यगोचरदोषाः वर्णितास्सन्ति भामहाचार्येण। परिच्छेदोऽयं ६९ कारिकाभिरुपैतोऽस्ति।

अथ प्रतिज्ञाहेत्वादिहीनं दुष्टं च वर्ण्यते।
समासेन यथान्यायं तन्मात्रार्थप्रतीतये। ( भा. का. - ५/१)

इत्थं प्रतिज्ञां विज्ञाय भामहाचार्यः अस्मिन् परिच्छेदे न्यायशास्त्रार्थनिरूपणस्य इह सङ्गतिं काव्ये शास्त्रार्थनिबन्धसङ्गतिञ्च न्यरूपयत्। ततश्च प्रत्यक्षानुमानप्रमाणतद्विषयौ वर्णितौ। अथ च प्रतिज्ञा, प्रतिज्ञाहीनम्, काव्यहेतुः, दृष्टान्तहीनम्, अनुमानदूषणम्, दूषणाभासः, न्यायविरुद्धनिबन्धनोदाहरणम्, न्यायशास्त्रार्थोपसंहारश्चेत्यादयः विषयाः विवेचिताः। तदनन्तरं शास्त्रकाव्ययोः विशेषः, काव्यप्रतिज्ञा, प्रतिज्ञाऽऽभासः, हेतुः, हेत्वाभासः, काव्यदृष्टान्तः, शुभदृष्टान्तः दुष्टम् इत्यादयः दोषाः सोदाहरणं समुपस्थापिताः।

**पञ्चमपरिच्छेदस्य उद्यानवृत्तिपरामर्शः**

व्याददाति मुखं व्याघ्रः सर्पोऽयमभसर्पति।
वनमानीय विजहावथापि परिपाति माम्।।

इत्यनेन परिच्छेदस्यास्य विवेचनमारब्धं ताताचार्यैः। प्रथमकारिकायाम् उपस्थितस्य **समासेन** इति पदस्य सार्थकतां विवेचयन् व्याख्याकारः कथयति यत् प्रतिज्ञादयः (प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि पञ्चावयवाः) परार्थानुमानापरपर्यायस्य न्यायस्य अवयवास्सन्ति। ये चावयवाः नैयायिकैर्महता प्रबन्धेन निरूपिताः। अतः तेषां कथनमिह निरूपणं शक्यम् इत्यतः समासेन इति

पदप्रयोगः भामहाचार्येण कृतः। समासोऽपि प्रतिज्ञादिशब्दमात्रस्य योऽर्थः यावता ज्ञातो भवेत् तावान् एव इत्यर्थः।

कुत्रचित् कारिकायाः अवतरणमुल्लिख्य तस्याः अन्वयकाठिन्यं दुर्बोधता वा ताताचार्यैः दूरीकृता वर्तते। काव्यलक्षणे प्रवृत्तस्य हेतुन्यायनिरूपणे का सङ्गतिः? इत्यस्योत्तरकारिकायाः विवेचने 'वाच्यं यत्र काव्ये हेतुन्यायस्यापि सङ्घटना दृश्यते तत्र साध्वसाधुविवेकाय सोऽपि काव्यलक्षणकारैः विवेक्तव्यः' इति कथयामास व्याख्याकारः। तथैव ये हि शास्त्रेषु शालीनमतयः अथ च तत्रावश्यं व्युत्पाद्याः तादृशानुद्दिश्य प्रवर्तमानाः खलु कवयः शास्त्रार्थानपि स्वकृतिषु निरूपयन्ति, रसप्ररोचिताः सन्तः तदुपसिक्तान् शास्त्रार्थानपि ग्रहीष्यन्तीति।

नैयायिकाः प्रत्यक्षानुमानमिति प्रमाणद्वयमेव स्वीकुर्वन्ति। तत्र हि इन्द्रियसन्निकृष्टोऽर्थः प्रत्यक्षस्य विषयः। असन्निकृष्टोऽनुमानस्येति। अस्मिन् प्रसङ्गे भामहाचार्यः सौगतानां मतमुपस्थापयाञ्चकार। तेषां मते असाधारणसामान्यविषयत्वं प्रत्यक्षम्। अत्र हि 'असाधारणम्' इत्यस्य व्याख्यां करोति ताताचार्यः यत् सर्वेतरव्यावृत्ता तत्तद्व्यक्तिः असाधारणमुच्यते इति। ततश्च वसुबन्धोः, वैय्याकरणस्य विज्ञानवादिनश्चाभिप्रायः भामहाचार्येण स्वकारिकाभिः विवेचितः। अस्य टीकाप्रसङ्गे ताताचार्यवर्यस्य पाण्डित्यमवलोक्यते अस्माभिः। अर्थात् न्यायव्याकरणशास्त्रयोः यथा गाढपरिचयः भामहस्य तथैव ताताचार्याणामपि। बौद्धतार्किकाणामपि मतभेदोपन्यासं तन्निरसनं च कुर्वन्नयं आचार्यभामहः स्वकीयं तर्कपाण्डित्यमतीवाविष्करोति। तेन हि व्याख्यायामपि व्याख्याकारस्य तथैव नैपुण्यमपेक्ष्यते। यत्र च ताताचार्यमहोदयाः पूर्णतः सफलाः सञ्जाताः। यथा 'प्रत्यक्षं तत्त्ववृत्तिः इति भामहाचार्यस्य प्रत्यक्षप्रमाणलक्षणविवरणे ताताचार्यस्येयं व्याख्या - जात्याद्यपोहेषु च तथा प्रत्यक्षवृत्त्यास्पदेषु, सा जातिर्बुद्धिगोचरा सती सिद्धा भवति। गुणादयश्च । गौरित्यत्र हि अगोव्यावृत्तिः 'अपोह' इत्युच्यते। अगोव्यावृत्तिश्च गोभिन्नभेदः। गौश्च गोत्ववती। तेनायमपोहो गोत्वमप्रतीत्य न प्रत्येतुं शक्यते। यदि च प्रतीयते प्रत्यक्षप्रमागोचरीकृतत्वादस्त्येव सा, न तु नास्ति। अथ चेदुच्यते - वितथमयर्थार्थमिदं विज्ञानम्। अवस्तुकं निर्विषयकं

हि तत्। न हि गोत्वं परमार्थत्वात्। तच्चेदं विषयीकरोति। तस्मादवस्तुकं वितथम्। न च वितथः प्रत्ययो वस्तुसाधनायालमिति - तन्न। तत्त्ववृत्ति यथार्थविषयं हि भवतामपि प्रत्यक्षम्। प्रमाणस्य हि भवद्भिरपि विभागः क्रियते प्रत्यक्षमनुमानमिति। तस्य कथमिदानीं वैत्थ्यमुच्येत। कश्चिदंशः काचिद्व्यक्तिः ग्राह्यः अपरो ग्राहक इति भेदवान् विज्ञानांशो मतो यदि तदप्ययुक्तम्। विषयसामान्यविनिर्मुक्तं विज्ञानं सर्वमपि हि तुल्यस्वरूपं सर्वात्मनाऽविशिष्टं भवति। तथा सति कथमेकं विज्ञानं गौरिति भासेत अपरमश्व इति। असत्यप्येवं विशेषहेतौ यदि विशेषावभासः इष्यते तर्हि सः विशेषः विकल्पना आरोपमात्रसिद्धः न वास्तवः। अस्त्विति चेत् उक्तमुत्तरं 'प्रत्यक्षं तत्त्ववृत्ति हि' इति।

तथैव सर्वागमविरोधिनीदोषव्याख्यानसन्दर्भे ताताचार्यः सर्वदार्शनिकानां प्रमाणसङ्ख्यामसूचयत्। यथा प्रत्यक्षमेकं चार्वाका इच्छन्ति। तच्चानुमानं चेति द्वे सौगतवैशेषिकादयः। ते च शब्दोपमाने चेति चत्वारि नैयायिकाः। तानि चार्थापत्तिश्चेति पञ्च प्राभाकराः। तानि चानुपलब्धिश्चेति षट् कौमारिलाः। केषाञ्चित् त्रीण्येव प्रमाणानि - यथा 'योगानाम् प्रत्यक्षानुमानागमाः प्रमाणानि इति भगवान् पतञ्जलिः' इति।

इत्थमस्याः व्याख्यायाः पठनेन अध्येतुः सामान्यज्ञानं तु वर्धते इत्यत्र नास्ति सन्देहः। आदौ विवेचनकारेण भामहाचार्यस्य कारिकाः अनुसृत्य प्रतिज्ञा, हेतुः हेत्वाभासश्चेत्यादिनां सविस्तरं व्याख्या विहिता। ततश्च काव्येषु एते विषयाः कथमुपयुज्यन्ते इत्यस्योदाहरणानि प्रदर्शितानि। एवमेवायं परिच्छेदः न केवलं काव्यशास्त्रज्ञानां कृते अपि तु दर्शनशास्त्रजिज्ञासूनां कृतेऽपि ज्ञानदायकोऽस्ति।

**षष्ठः परिच्छेदसारांशः**

षष्ठे परिच्छेदे भामहाचार्येण ६६ परिमिताः कारिकाः विरचिताः। परिच्छेदेऽस्मिन् व्याकरणप्रशंसा, व्याकरणाध्ययनावश्यकता, शब्दस्वरूपविमर्शः, अर्थपरामर्शः, कवीनां प्रयोज्यप्रयोज्यशब्दविवेचनप्रतिज्ञा, अप्रयोज्यप्रदर्शनम्, अष्टाध्यायीक्रमेण विशेषतः प्रयोज्याप्रयोज्यविवेचनम्, पुनः पाणिनीयप्रशंसा चेत्यादयः विषयाः सङ्गृहीतास्सन्ति।

अन्ते च ग्रन्थोपसंहारमकरोत् भामहाचार्यः एके श्लोकेन। तद्यथा -

अवलोक्य मतानि सत्कवीना-
मवगम्य स्वधिया च काव्यलक्ष्म।
सुजनावगमाय भामहेन
ग्रथितं रक्रिलगोमिसूनुनेदम्॥

## षष्ठपरिच्छेदस्य उद्यानवृत्तिपरामर्शः

षष्ठपरिच्छेदस्यारम्भः भामहाचार्यः व्याकरणप्रशंसया विदधाति। उद्यानवृत्तौ अस्य कारणं विवेचयन् ताताचार्यः वक्ति यत् सुप्सु तिङ्सु चानल्पो विशेषः कवीनामवधेयः। यतो हि काव्ये सौशब्दस्य शब्दहीनपरिहारमात्रात्मनोऽर्थव्युत्पत्तिकारिता नास्ति चेत् कवीनामनादरः भवतीति। अतः धातव, उणादयो, गणाः, वार्तिकं भाष्यञ्चेतेषां पुनःपुनरनुसन्धानरूपस्य मननस्य दृढपरिग्रहः कर्तव्यः कविना। साधुशब्दस्वरूपाधिगमाय व्याकरणस्य अध्ययनं विधत्ते।

शब्दस्वरूपविमर्शप्रसङ्गे भामहाचार्येण निजकारिकाभिः विभिन्नानि मतानि प्रतिपादितानि। किन्तु तत्र कस्य किं मतम् ? इति येऽनधितशास्त्रं ते अवगन्तुं न पारयन्ति। तस्य विश्लेषणं ताताचार्यवर्यैः उद्यानवृत्तौ विहितम्। वर्णात्मकशब्दवादेऽर्थप्रतीत्यनुपपत्तिं मन्यमानानाम् अखण्डशब्दवादिनां तेषामेषः विकल्पः - वर्णसमुदायो हि पदमिष्यते। स समुदायो वर्णेभ्योऽतिरिक्तो न वेति। केचन वदन्ति यत् न हि वर्णाः प्रत्येकर्थमभिदधति। शेषवैयर्थ्यापत्तेः। एवं प्रत्येकमसमर्थानां वर्णानां समुदाये कथम् अर्थविशेषप्रत्यायनसामर्थ्यमाविर्भविष्यति। एवं चेत् वर्णानां समुदाय एव न सम्भवति। एकदेशकालावच्छिन्नत्वं हि समुदायः। न चैतद्वर्णेषु सम्भवति॥ क्रमवर्तित्वात् इति। ततः स्फोटवादिनामभिप्रायः उपस्थापितः। गौतमोऽप्याह 'सामयिकत्वाच्छब्दार्थसम्प्रत्ययस्य' इत्यनेन शब्दस्वरूपं प्रमाणीकृतम्।

तथैव अर्थपरामर्शेऽपि 'औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः' इति जैमिनिः। सिद्धे शब्दार्थसम्बन्धे इत्यनेन कात्यायनवचनमुपपाद्य शब्दार्थसम्बन्धस्य नित्यत्वं शास्त्रकारैरपि अङ्गीक्रियते इत्यवोचत् ताताचार्य उद्यानवृत्तौ।

पदानाम् अप्रयोज्यप्रदर्शने भामहाचार्येण 'ध्याति' इति पदमुदाहृतम्। पदस्यास्य असाधुत्वं प्रमाणीकर्तुं व्याख्याकारः निजविवेचने व्याकरणदृशा पदसिद्धिं निरूपयति। तद्यथा- 'ध्याति' इत्यत्र 'ध्यै' - चिन्तायामिति धातुः। अस्मात् तिपि शपि आयादेशे ध्यायतीति रूपम्। तत्र 'तनादिकृञ्भ्य उः' इत्यत्र तनादित्वादेव कृञोऽप्यप्रत्यये सिद्धे तस्य पुनः पृथग्ग्रहणं गणकार्यस्यानित्यत्वं ज्ञापयिति। तेन 'अदिप्रभृतिभ्यः शपः' इति विहितस्य लुकोऽभावे अदाद्यन्तर्गतश्वसधातोर्लिङि स्वसेदिति रूपं सिद्ध्यति। 'न विश्वसेदविश्वस्तम्' इत्यादौ यथा। तदेतत् प्रसिद्धं वैयाकरणकुले। एतद्दर्शी कश्चिद्यदि यथा विहितः शपो लुक् क्वचिन्न भवति तथा अविहितोऽपि क्वचिद्भवति इति कृत्वा ध्यै धातोस्तिपि 'आदेच उपदेशेऽशिति' इति ऐकारस्याकारे 'ध्याति' इति असाध्विति व्याख्यातम्।

अष्टाध्यायीक्रमेण विशेषतः प्रयोज्याप्रयोज्यविवेचने भामहाचार्यस्य कारिकाः अर्थावगमने सामान्यतः काठिन्यं जनयन्ति। येन भामहस्य अभिप्रायज्ञाने दुर्बोधता जायते। परन्तु ताताचार्यस्य उद्यानवृत्तिः अस्मदीयां समस्यां निवारयितुं पूर्णतः सफला अभवत्। यतः विवेचनकारः ताताचार्यः उद्यानवृत्तौ ससूत्रं सविस्तरञ्च व्याख्यानमकरोत्। परिच्छेदेऽस्मिन् ताताचार्यस्य व्याकरणपाण्डित्यं पदे पदे दरीदृश्यते।

अन्तिमे च 'सर्वस्य कर्तारमिमं न वेद' इत्यनेन उद्यानवृत्तेः उपसंहारमकरोत् ताताचार्यः।

## उद्यानवृत्तेः पर्यालोचनम्

पण्डितराजेन ताताचार्यशिरोमणिना प्रणीतायाः उद्यानवृत्तेः परिच्छेदमनुसृत्य परामर्शविवेचनं विहितमितःपूर्वम्। सम्प्रति तस्याः वैशिष्ट्यानि निरूप्यन्ते।

**१) उद्यानवृत्तेः उपजीव्यग्रन्थाः -**

भामहीयकाव्यालङ्कारस्य विषयः व्यापकोऽस्ति। अतः ताताचार्यैः उद्यानवृत्तेः परिपूर्ततायै नानाविधग्रन्थानामाधारः स्वीकृतः। तत्र हि साहित्य-दर्शन-व्याकरणादयः शास्त्रग्रन्था अन्तर्भूतास्सन्ति। वाल्मीकिरामायणम्, कालिदासस्य रघुवंशम्, गौतमन्यायशास्त्रम्, पाणिनेः अष्टाध्यायी, सौगतमतग्रन्थाः सङ्गीतरत्नाकरः, दण्डिनः काव्यादर्शः, भरतस्य नाट्यशास्त्रम्, वामनाचार्यस्य काव्यालङ्कारसूत्रवृत्तिः, मम्मटस्य काव्यप्रकाशः चेत्यादयः बहवः उपजीव्यग्रन्थाः व्याख्यानकाले ताताचार्यैः उपयुक्ताः उद्यानवृत्तौ। यथा रसवत्दलङ्लकारस्य उदाहरणे ताताचार्यः कुमारसम्भवमहाकाव्यस्य श्लोकमुल्लिखति -

तं वीक्ष्य वेपथुमती सरसाङ्गयष्टि-
निर्क्षेपणाय पदमुद्धृतमुद्वहन्ती।
मार्गाचलव्यतिकराकुलितेव सिन्धुः
शैलाधिराजतनया न ययौ न तस्थौ॥ (कुमारसम्भवम् - ५.८५ )

एवमेव बहुत्र विभिन्नकाव्येभ्यः उदाहरणानि उदाहृतानि। तथैव महाभारतस्य वनपर्वणः श्लोकोऽयम् -

दिवं स्पृशति भूमिं च शब्द पुण्यस्य कर्मणः।
यावत् स शब्दो भवति तावत् स्वर्गे महीयते॥ इति।

अनेन स्पष्टमेव यत् पण्डिराजताताचार्यः बहुविधग्रन्थानधितवानिति।

**२) सरलया भाषया विवेचनम् -**

भामहीयकाव्यालङ्कारस्य उद्यानवृत्तेः व्याख्या अतीव सरलया भाषया व्यरचिता। काव्यशास्त्रमनधिकृतोऽपि तया टीकया भामहीयकाव्यालङ्कारग्रन्थप्रवेशाय काव्यतत्त्वावगमनाय च सक्षमः भवति। सुबोधा भाषा सहजशैली चास्याः उद्यानवृत्तेः वैशिष्ट्यम्। यथा हि काव्यालङ्कारस्य चतुर्थे परिच्छेदे शब्दहीनदोषस्येयं कारिका -

सूत्रकृतपदकारेष्टप्रयोगाद्योऽन्यथा भवेत्।
तमाप्तश्रावकासिद्धेः शब्दहीनं विदुर्यथा॥ (भा. का. - ४/२२)

कारिकायाः अस्याः उद्यानवृत्तौ विश्लेषणमित्थम् -

'सूत्रकृद्भगवान् पाणिनिः। पदकारः कात्यायनः। भाष्यकारश्चोपलक्ष्यते। तेषाम् इष्टो यः तस्मादन्यथाभूतो यः प्रयोगः तं शब्दहीनं मन्यन्ते। कस्मात्? आप्तश्रावकासिद्धेः आप्ताः प्रामाणिकवृद्धाः तादृशाः श्रावकाः श्रावयितारः अनुशासितार इति यावत्। तेषामसिद्धेः अभावात्। पाणिनिकात्यायनपतञ्जलयः एव हि त्रयः शब्दविषये प्रमाणभूताः। तदनुशासनविरोधेन कृतस्य प्रयोगस्य तादृशाप्तान्तरानुशिष्टत्वाभावाद्दुष्टत्वमि'ति।

तथैव यमकस्य साधुत्वं भामहाचार्यः एवं कथयाञ्चकार -

प्रतीतशब्दमोजस्वि सुश्लिष्टपदसंधि च
प्रसादि स्वभिधानं च यमकं कृतिनां मतम्।।(भा. का. - २/१८)

अस्याः कारिकायाः विवेचनं पण्डितराजताताचार्यः एवमकरोत् यत् 'यत्र शब्दाः प्रसिद्धाः भवन्ति न त्वप्रसिद्धेभ्यो धातुभ्यो निष्पादिताः। ओजश्च भवति समासवदेकपदत्वेन भासमानत्वमिह ओजः। अत्यन्तं पृथक्पदत्वे हि भासमाने यमकबुद्धिर्नोदियात्। पदानां सन्धिश्च सुश्लिष्टो भवति न तु उच्चारणक्लेशदायी। यथा अल्पेतरत्वाच्छुतनिष्क्रयस्य इति। काव्यसामान्यगुणः एवायमिहोक्तः। शब्दचित्रमिति कृत्वा मा तत्रोपेक्षा करोति। प्रसादि। प्रसिद्धार्थाश्च शब्दा भवन्ति। न त्वेकाक्षरकोशसमालोचनसमपाद्यार्थाः। स्वभिधानञ्च सुखोच्चारणीयाश्च शब्दा भवन्ति नान्यथेति। एतादृशं यमकं कृतिनां मतम्। साध्वित्यर्थः।'

इत्थङ्कारं विवेचनं पठितॄणां सुबोधाय इति तु सुस्पष्टमेव।

**३) व्याख्याकारस्य शास्त्रपाण्डित्यम्** -

भामहस्य काव्यालङ्कार इति ग्रन्थः न केवलं काव्यतत्त्वानां निरूपक अपि तु भामहाचार्यस्य शास्त्रवैदुष्यप्रदर्शकोऽपि वरीवर्ति। यः साहित्यन्यायव्याकरणदर्शनशास्त्रवेत्ता स एव भामहाचार्यस्याभिप्रायं ज्ञातुं प्रभवति। तस्मादेव इयमुद्यानवृत्तिव्याख्या पण्डितराजताताचार्यस्य शास्त्रपाण्डित्यं निश्चयेन विवृणोति। तस्यैव विवरणमधुना क्रियते।

**अ) व्याकरणशास्त्रज्ञानम् -** भामहीयकाव्यालङ्कारस्य अन्तिमः षष्ठः परिच्छेदः पूर्णतः काव्येषु सौशब्द्यप्रयोगाय विरचितः। यतो हि 'एकः शब्दः सम्यक् ज्ञातः सुष्ठु उक्तः स्वर्गे लोके च कामधुक् भवती'ति तु सर्वविदितमेव। 'पदमेकं वरं साधु' इत्येव भामहाचार्यस्याभिप्रायः। तेन हि षष्ठपरिच्छेदस्य विवेचनाय व्याकरणशास्त्रमध्येतव्यमेव। अष्टाध्यायीक्रमानुसरणमेव भामहवैशिष्ट्यं प्रत्यपादयदत्र।

पण्डिराजताताचार्यः 'श्रद्धेयं जगति मतं हि पाणिनीयम्' इति भामहाचार्यस्य मतमङ्गीचकारेति उद्यानवृत्तेः व्याख्या एव प्रमाणयति। षष्ठपरिच्छेदे समुपस्थितानां कारिकानां विवेचने सूत्रोल्लेखं विधाय विवरणकारेण भामहाभिप्रायः सुबोधः कृतोऽस्ति। यथा भामहीयकाव्यालङ्कारस्य षष्ठपरिच्छेदस्येयं कारिका -

अभ्यस्तेषु प्रयोक्तव्यमदन्तं घुभृञोः शतुः।
असौ दधदलङ्कारं स्रजं बिभ्रच्च शोभते॥(भा. का. - ६/५९)

अस्याः कारिकायाः व्याख्यानं ताताचार्य एवं करोति - 'जुहोत्यादयो जक्षित्यादयश्च अभ्यस्ताः। तेषां मध्ये यौ घुभृञौ, 'दाधाघ्वदाप्' इति सूत्रेण दाधातोर्धाधातोश्च घुरिति संज्ञा। भृञ् 'डुभृञ् धारणपोषणयोः' इति जुहोत्यादिः। घुश्च भृञ्च घुभृञौ तयोः सम्बन्धी यः शता शतृप्रत्ययः 'लटः शतृशानचावप्रथमासमानाधिकरणे' इति विहितः तत्सम्बन्धि अदन्तं प्रयोक्तव्यम्। यथा दधदित्यादि। दधदिति घोरुदाहरणम्। बिभ्रदिति भृञः। 'नाभ्यस्ताच्छतुः' इति सूत्रेणेह नुमो निषेधाददन्तत्वम्। अन्यथा 'पचन्' इत्यादिवत् अन्नन्तत्वं स्यात्। अस्मिन् श्लोके द्वितीयपादे 'अदन्तं च विदेः शतुः' इति पठनमसमीचीनमिति ध्येयम्। इति।

तथैव 'ध्यायती'ति पदं कथमसाधुः इति प्रतिपादयन् व्याख्याकारः निरूपयति यत् 'ध्यै चिन्तायामि'ति धातुः। अस्मात् तिपि शपि आयादेशे ध्यायतीति रूपम्। तत्र 'तनादिकृञ्भ्य उः' इत्यत्र तनादित्वादेव कृञोऽप्युप्रत्यये सिद्धे तस्य पुनः पृथग्ग्रहणं गणकार्यस्यानित्यत्वं ज्ञापयति। तेन 'अदिप्रभृतिभ्यः शपः' इति विहितस्य लुकोऽभावे अदाद्यन्तर्गतश्वसधातोर्लिङि श्वसेदिति रूपं सिद्ध्यति। 'न

विश्वसेदविश्वस्तम्' इत्यादौ यथा। तदेतत् प्रसिद्धं वैयाकरणकुले। एतद्दर्शी कश्चिद्यदि यथा विहितः शपो लुक् क्वचिन्न भवति तथाऽविहितोऽपि क्वचिद्भवतीति कृत्वा ध्यैधातोस्तिपि 'आदे च उपदेशेऽशिति' इति ऐकारस्याकारे 'ध्याति' इति असाधुः इति।

'पाणिनेः वृद्धिपक्ष एव कविभिरादरणीय' इति भामहाचार्याभिप्रायं विवेचनकारः एवं प्रस्तौति यत् गुणवृद्धिप्रतिषेधप्रयोजकस्य कितो ङितश्च प्रत्ययस्य संक्रम इति प्राचां वैयाकरणानां संज्ञा। अदाद्यन्तर्गतस्य 'मृजू शुद्धौ' इति धातोः प्रत्यये परे वृद्धिर्विधीयते 'मृजेवृद्धिः' इति। अत्र 'क्ङित्यजादौ वेष्यते' इति इष्टया अजादौ किति ङिति च प्रत्यये परे वृद्धैर्विकल्पो भवति। तेनास्माद्धातोः 'झि' प्रति प्रथमपुरुषबहुवचने कृते 'झोऽन्तः' इति झकारस्य अन्तादेशे अजादित्वात् 'सार्वधातुकमपित्' इत्यनेन ङित्त्वाच्च वृद्धिपक्षे 'मार्जन्ति' इति, तदभावपक्षे मृजन्ति इति च रूपम्। किन्तु वृद्धिपक्ष एव तत्र विशेषमादरणीयः इति।

काव्येषु के शब्दाः प्रयोक्तव्याः के च न इत्यस्मिन् विषये काव्यालङ्कारे भामहाचार्यस्येयं कारिका -

सिद्धो यश्चोपसंख्यानादिष्ट्या यश्चोपपादितः।
तमाद्रियेत प्रायेण न तु योगविभागजम्।। ( भा. का. - ६/२९)

अस्याः टीकायां टीकाकारः विवृणोति यत् पाणिनिसूत्रेणसिद्धा अपि शब्दाः भाष्यवार्तिककृदभ्यां 'शकलकर्दमाभ्यामुपसंख्यानम्, शकलकर्दमाभ्यामणपीष्यते, द्विपर्यन्तानामेवेष्टि' इत्येवम् उपसंख्यानेच्छार्थपदघटितैर्वचनैः साधिताः। केचन शब्दाः योगस्य सूत्रस्य विभागेन निष्पादिताः। तत्र उपसंख्यानादिना साधिताः शब्दाः कामं प्रयोगार्हाः। योगविभागजास्तु सर्वथा न प्रयोक्तव्याः इति।

एवमेव सम्पूर्णपरिच्छेदे ससूत्रविवेचनमेव ताताचार्यस्य व्याकरणपाण्डित्यं प्रदर्शयति।

## ब) न्यायशास्त्रवैदुष्यम्

यथा भामहाचार्यस्य न्यायशास्त्रस्य गाढः परिचयोऽऽसीत् तथा उद्यानवृत्तिविवेचनकारस्यापि। न्यायशास्त्रस्याध्ययनेन विना भामहीयकाव्यालङ्कारस्य पञ्चमपरिच्छेदविवरणं नैव शक्यम्। यतो हि पञ्चमपरिच्छेदे प्रबन्धसामान्यगोचराः ये दोषाः प्रतिपादिताः ते सर्वे न्यायशास्त्रमनुसृत्यैव। तेषां विवेचनाय न्यायशास्त्रं नितरामध्येतव्यमेव। पण्डिराजताताचार्योऽपि न्यायशास्त्रे पारङ्गत आसीत् इत्यस्य प्रमाणं विद्यते तस्य पञ्चमपरिच्छेदस्य उद्यानवृत्तिः। यथा - 'हेत्वाभास-व्यवस्थिति' इत्यस्य व्याख्याने वैशेषिकभाष्यकारस्य मतमुपपादयति 'तत्रासिद्धश्चतुर्विधः। उभयासिद्धोऽन्यतरासिद्धस्तद्भावसिद्धोऽनुमेयासिद्धश्चेति। तत्रभवान् मीमांसावार्तिककाराश्च -

दर्शनादेकदेशस्येत्यनेनैतद्व्युदस्यते।
यत्रैकस्योभयोर्वाऽपि संशयाधीविपर्ययः।।
कृतकत्वगुणत्वादौ परोक्ते याज्ञिकं प्रति।
स्वोक्ते चैवंप्रकारे स्यादासिद्धोऽन्यतरस्य तु।। इति।

व्याख्याता पार्थसारथिश्च - दर्शनादिति। वादिप्रतिवादिनोरेकस्य द्वयोर्वा संशयाज्ञानविपर्यया यस्मिन् सोऽनिश्चितत्वादसिद्धोऽनेन व्युदस्यते। शब्दनित्यत्वे हि यदेव मीमांसकं प्रति वैशेषिकादिभिः कृतकत्वगुणत्वादिकं हेतुत्वेनोच्यमानं प्रतिवादिनोऽसिद्धम्। तदेव मीमांसकेनोच्यमानं वाद्यसिद्धमिति इति।

तथैव 'दृष्टान्तहीनम्' इति भामहकारिकाव्याख्याने ताताचार्यः स्पष्टयति यत् पर्वतो वह्निमानित्यादौ वह्निविशिष्टः पर्वतादिः साध्यः। तत्र साध्यधर्मीति पर्वतादेः, साध्यधर्म इति वह्न्यादेश्च प्राचां व्यवहारः। साधनधर्मो धूमादिः। आभ्यां साध्यसाधनरूपाभ्यां वह्निधूमाद्यात्मकधर्माभ्यां तद्वत्त्वेनेत्यर्थ- सिद्धः निश्चितः महानसादिः **दृष्टान्त** उच्यते। अयमेकः साधर्म्यदृष्टान्तः। अन्यस्तु वैधर्म्यदृष्टान्तः। स उच्यते तद्विपर्ययतो वाऽपीति। साध्यसाधनधर्मवत्तया सिद्धः पूर्वमुक्तः। तद्वैपरीत्येन साधनधर्मशून्यत्वेन सिद्धो ह्रदादिरपि दृष्टान्त उच्यते इति। दृष्टान्तस्य लक्षणान्तरं

वर्णयति यत् यत्र हेतोः साध्यनिरूपिता अन्वयरूपा व्याप्तिर्गृह्यते यत्र हेतुरस्ति तत्र साध्यमप्यस्तीति, स एको दृष्टान्तः। यत्र तु साध्याभावे हेतोर्नास्तीति व्यतिरेको गृह्यते सोऽन्यो दृष्टान्त इत्येवंविधो द्वेधा दृष्टान्त इत्यन्यैरुच्यते। परं प्रति प्रयोगकाले साध्यसाधनवत्तया सिद्धत्वमेव दृष्टान्तस्यापेक्षणीयम्। न व्याप्तिग्राहकत्वमपीति।

ऋते न्यायशास्त्राध्ययनात् इत्थङ्कारं विवेचनं ध्रुवं दुष्करम्। प्रतिज्ञाहेत्वादिहीनदोषव्याख्यासन्दर्भे पण्डितराजताताचार्यस्य नूनं न्यायशास्त्रवैदुष्यं दृग्गोचरीभवति।

**क) सङ्गीतशास्त्रपरिचयः -**

विद्वद्वर्याणां पण्डितराजताताचार्याणां सङ्गीतशास्त्रस्यापि सम्यक् परिचयः आसीत्। तैः 'सङ्गीतरत्नाकरः' इत्ययं ग्रन्थः सावधानतया अधीत इत्यस्य प्रमाणं चतुर्थपरिच्छेदविवेचने समुपलभ्यते अस्माभिः। तत्र हि कलाविरोधिदोषविवरणे भामहाचार्यः 'ऋषभात् पञ्चमस्तस्मात् सषट्जं धैवतं स्मृतम्। अयं हि मध्यमग्रामो मध्यमोत्पीडितर्षभः' (भा.का.- ४/२४) इत्युल्लिखति। अस्य व्याख्यानसन्दर्भे पण्डितराजताताचार्येण षड्जर्षभगान्धारमध्यमपञ्चमधैवतनिषादास्तावत् सप्तः स्वराः, एष्वेकैकोऽपि अनेकश्रुत्यारब्ध इति प्रत्यपादि। अपि च श्रुतिस्वरयोर्भेदनिरूपणप्रसङ्गे पञ्चपक्षानामुपस्थापनम् अकरोत् सः। ततश्च क्रमेण सप्तानां स्वराणां सविस्तरं वर्णनं विधाय सङ्गीतकलाविरोध्युदाहरणव्याख्यानं सुबोधगुणोपेतं कृतवान्नस्ति टीकाकारः पण्डितराजताताचार्यशिरोमणिः। अर्थात् भामहाचार्यस्य सङ्गीतवैदुष्येन सह व्याख्याकारस्यापि सङ्गीतशास्त्रनैपुण्यम् उद्यानवृत्त्या चकास्ति।

**ड) काव्यशास्त्रनैपुण्यम् -**

काव्यसास्त्रग्रन्थानां परिशीलनं पण्डितराजताताचार्येण ध्रुवं कृतमासीदित्यस्य निदर्शनमुद्यानवृत्तौ पदे पदे वा स्थाने स्थाने वा अवलोक्यते। यथा उत्तमकाव्यरचनायै लोकशास्त्रकाव्याद्यवेक्षणम् अनिवार्यं तथैव साधुव्याख्याप्रतिपादनाय तत्सन्दर्भग्रन्थानां परिशीलनम् अनिवार्यम्। 'भामहीयकाव्यालङ्कारः' इत्येकः अलङ्कारशास्त्रीयग्रन्थोऽस्ति। तेन हि ऋते

काव्यशास्त्रग्रन्थाध्ययनात् तस्य व्याख्याकर्म दुष्करमेव। भामहाचार्यः स्वयमपि 'अवलोक्य मतानि सत्कवीनामवगम्य स्वधिया च काव्यलक्ष्म' इत्यवर्णयत्। एवं स्थितौ विवेचनकारस्यापि काव्यशास्त्रनैपुण्यमवगम्यते अस्माभिः। यतो हि यथासमयं तत्र तत्र प्राचां वाक्यानि उद्धृतानि व्याख्याकारेण। वक्रोक्तिसमासोक्त्योः भेदकथनप्रसङ्गे प्रथमपरिच्छेदे आचार्यदण्डिनः मतं व्याख्याने प्रत्यपादयत् ताताचार्यः यत् 'भिन्नं द्विधा समासोक्तिर्वक्रोक्तिश्चेति वाङ्मयम्' (काव्यादर्शः - २/३६३) इति। तत्रैव कुन्तकाचार्यं निरस्यन् हेमचन्द्रः आह - 'कविप्रतिभया निर्विकल्पप्रत्यक्षकल्पया विषयीकृता वस्तुस्वभावा यत्रोपवर्ण्यन्ते स जातेर्विषयः'। एवञ्च -

अलङ्कारकृतां तेषां स्वभावोक्तिरलङ्कृतिः।
अलङ्कार्यतया तेषां किमन्यदवशिष्यते॥

इति कैश्चित् प्रतिपादितं तन्निरस्तमेव इति। शब्दस्य वक्रताऽभिधेयस्य च लोकोत्तररूपेणावस्थानम् इत्ययमेवालङ्कारस्य अलङ्कारभावः इति भामहाचार्यस्य वचनं व्याचक्षाण एव लोचनकारोऽन्यत्राह यत् काव्येऽपि च लोकनाट्यधर्मिस्थानीये स्वभावोक्तिवक्रोक्तिप्रकारद्वयेन अलौकिकप्रसन्न मधुरौजस्विशब्दसमर्प्यमाणविभावादियोगादियमेव रसवार्ता इति विवेचनकारः समुपवर्णयति व्याख्याने। समाहितालङ्कारस्य व्याख्याप्रसङ्गे दण्डिनः लक्षणं ताताचार्यः तत्र विवृणोति यत् -

किञ्चिदारभमाणस्य कार्यं दैववशात् पुनः।
तत्साधनसमापत्तिर्या तदाहुः समाहितम्॥ इति।

तथैव उपमायुक्तं श्लिष्टालङ्कारस्य टीकायां 'स धर्मेषु तन्त्रप्रयोगे श्लेषः' इति वामनाचार्यस्याभिप्रायम् उद्धरति व्याख्याकर्ता।

इत्थं पण्डितराजताताचार्यः भामहीयकाव्यालङ्कारस्य टीकाप्रसङ्गे वामनाचार्यः, आचार्यदण्डिः, लोचनकारः अभिनवगुप्तः, हेमचन्द्रः चेत्यादीनामभिप्रायं विलिख्य न केवलं स्वीयं काव्यशास्त्रीयं नैपुण्यं प्रादर्शयत् अपि

तु विवेचनरीतिरपि सुबोधामकरोत्। अर्थात् अनया उद्यानवृत्त्या अलङ्कारशास्त्रस्य अध्ययनकर्ता कतिचन आलङ्कारिकाणां मतानि ज्ञातुं प्रभवतीति निश्चप्रचम्।

**इ) सौगतमतपरिचितिः**

भामहाचार्येण **काव्यालङ्कार** इति ग्रन्थस्य पञ्चमपरिच्छेदे प्रतिज्ञाहेत्वादिहीनाः ये दोषाः प्रोक्ताः तत्र नैयायिकवैशेषिकबौद्धादीनां विभिन्नानि प्रस्थानानि समुपदिष्टानि। अतोऽस्य परिच्छेदस्य विवेचनाय तेषां सर्वेषां प्रस्थानानां ज्ञानं नूनमावश्यकम्। पण्डिराजताताचार्यः तत्रापि सफलः सञ्जातः। न्यायशास्त्रस्य पाण्डित्यम् इतःपूर्वमेव प्रोक्तमस्ति। सम्प्रति सौगतमतपरिचितिः तेषां कथमासीत्? इति अत्र विव्रियते।

प्रमाणविशेषहेतुन्यायनिरूपणोपयोगितया प्रमाणसामान्यफलं प्रदर्शयन् भामहाचार्य 'असाधारणसामान्यविषयत्वं तयोः किल' इत्यनेन सौगतमतं निर्दिशति। अस्य विवेचने ताताचार्यः वर्णयति यत् - 'प्रत्यक्षस्य असाधारणं विषयः। सर्वेतरव्यावृत्ता तत्तद्व्यक्तिः असाधारणम् उच्यते। एतत् स्वलक्षणमित्यपि व्यवह्रियते। तद्भिन्नं सर्वव्यक्त्यनुगतं सामान्यम्। एतदनुमानस्य विषयः किलेत्यनङ्गीकारे तदाहुः - 'उन्मीलितनेत्रस्य विकल्पोऽपि गौरयमित्यपरोक्षावभास एव प्रतीयते। न ह्ययं परोक्षापरोक्षविभागो विषयीकृतः। यदि हि तथा स्यात् सर्वदैव सामान्यं परोक्षं स्यात्। न चैवमस्ति। सामान्याकारस्यापि परोक्षापरोक्षविभागदर्शनात्। तथा हि श्वेतं स्वलक्षणं पश्यन् अनिर्धारितगवाश्वजातिविशेषः हेषाशब्दश्रवणाद् अश्वत्वं तस्मिन्नेव स्वलक्षणे अनुमानोऽपि परोक्षं बुद्ध्यते। वदन्ति हि 'अश्वोऽप्ययं न चक्षुषा तथाऽवभासते' इति। प्रत्यासन्नस्तु वेति 'सम्प्रत्यश्वत्वमप्यस्य चक्षुषा पश्यामि न पूर्वम्' इति। स्वलक्षणं तु प्रागपि विशदमेवेति सामान्यंशगत एवायं दूरसमीपवर्तिनः परोक्षापरोक्षविभागः। तस्मात् कारणकृतोऽयं विभागः' इति।

तथैव अनुमानविवेचने दिङ्नागप्रभृतयः 'तद्विदो नान्तरीयार्थदर्शनं चापरे विदुः' इति भामहाचार्यः समुल्लिखति। अत्र औद्योतकरं वचः - अपरे तु ब्रुवते नान्तरीयकार्थदर्शनं तद्विदोऽनुमानमिति। योऽर्थो यमर्थमन्तरेण न भवति स नान्तरीयकः नान्तरीयकश्चासावर्थश्चेति नान्तरीयकार्थः तस्य दर्शनं तद्विदोऽनुमानं

यस्तं वेद तन्नान्तरीयकोऽयमिति ताताचार्यः टीकायां स्पष्टयति। षष्ठे परिच्छेदे अर्थपरामर्शसन्दर्भे भामहाचार्यः कारिकायामित्थं वर्णयति -

वर्णभेदादिदं भिन्नं वर्णाः स्वांशविकल्पतः।
के शब्दाः किञ्च तद्वाच्यमित्यहो वर्त्म दुस्तरम्।। ( काव्यालङ्कारः - ६/२०)

अस्याः कारिकायाः व्याख्याने ताताचार्यः विवृणोति -

स्वलक्षणापरपर्यायव्यक्तिव्यतिरिक्तं सामान्यं सौगतैर्नेष्यते। यथाहुः -

एतासु पञ्चस्ववभासिनीषु प्रत्यक्षबोधे स्फुटमङ्गुलीषु।
साधारणं षष्ठमिहेक्षते यः शृङ्गं शिरस्यात्मन ईक्षसे सः।।

इत्यनेन सौगतमतमुपस्थापयति पण्डितराजताताचार्यः। एवमेव बहुत्र दिङ्नागः वसुबन्धुः चेत्यादीनां नामानि उल्लिख्य सौगतप्रमाणानि प्रदर्शितानि उद्यानवृत्तिकारेण।

**४) प्रतिपरिच्छेदं मङ्गलश्लोकवैलक्ष्यण्यम्** -

ताताचार्यशिरोमणिना भामहाचार्यस्य **काव्यालङ्कार** इति ग्रन्थमधिकृत्य या **उद्यानवृत्तिः** इति व्याख्या प्रणीता तस्याः वैशिष्ट्यं नाम प्रतिपरिच्छेदं प्राक् विवेचनात् मङ्गलाचरणान्तर्भावोऽस्ति। विघ्नविनाशाय मङ्गलकरणप्रयोजनं तु सर्वविदितमेव। आह च - 'भगवान्महाभाष्यकारः मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि, प्रथन्ते वीरपुरुषाणि, आयुष्यमत् पुरुषाणि च भवन्ति। अध्येतारश्च प्रवक्तारो भवन्ति' इति। तेन ह्यनेन विवरणकारेण पण्डितराजेन ताताचार्येण मङ्गलश्लोकः परिच्छेदादौ परिच्छेदान्ते च निरूप्य व्याख्यानशोभा संवर्धिता। तेषां मङ्गलाचरणानां विवरणमत्र क्रियते।

प्रथमपरिच्छेदः

उद्यानवृत्तेः आदौ - पण्णातटपरिष्कारपारिजातफलायिता।
स्वदतां भामहगिरां वृत्तिरेषा विपश्चिताम्।।

अन्ते - वाचां परिश्रम्य समीरितानां
गृह्णातु मा वा रसमेष लोकः।
योऽसौ नियन्ता हृदि सन्निविष्टः

स्वयं स वक्ता स्वयमत्र तृप्तः॥

द्वितीयपरिच्छेदः

उद्यानवृत्तेः आदौ - पण्णारोधसि नाथो मे सुखं स्वपिति भोगिनी।
किन्त्वस्य वलते दृङ्ग्य्यौषसाम्बुजजित्वरी॥

अन्ते - नियोगतः कस्य स वाति वातस्तपत्यसौ
तामरसैकबन्धुः।
प्रवर्षति प्राज्यमयं पयोदः प्रभूतसस्या पृथिवी
विभाति॥

तृतीयपरिच्छेदः

उद्यानवृत्तेः आदौ - उपसन्नः प्रयात्यारादुदासीनमुपैति माम्।
न शृणोत्युक्तमागत्य स्मयमानः प्रभाषते॥

अन्ते - आपूर्यमाणे पवनेन रन्ध्रे
श्रुतिप्रियश्चेत् ध्वनिरुज्जिहीते।
कस्तावता कीचक तेऽभिमानो
गीतिर्मदीयेति मनोहरेति॥

चतुर्थपरिच्छेदः

उद्यानवृत्तेः आदौ - नमामि स्तौमि याचामि न किञ्चिदनुकम्पते।
समये किन्तु पश्यामि सर्वं सम्पन्नमात्मनः॥

अन्ते - इच्छामि कर्तुं न च पारयामि
किञ्चित् कदाचित् पुनरत्र किञ्चित्।
इच्छाम्यकर्तुं न पारयामि
कर्ता किमेषोऽस्म्युत कश्चिदन्यः॥

पञ्चमपरिच्छेदः

उद्यानवृत्तेः आदौ - व्याददाति मुखं व्याघ्रः सर्पोऽयमभिसर्पति।
वनमानीय विजहावथापि परिपाति माम्॥

अन्ते - ज्योतिषिं विभ्राजयते रसाढ्यं

प्रस्कन्दत्यम्बु ददाति वेदान्।
न विस्मितस्तत्र भवामि किं तु
दुरुच्य किञ्चिद् बत ताण्डवोत्कः॥

षष्ठः परिच्छेदः

उद्यानवृत्तेः आदौ - इयमूर्मिरियं झंझा कथं नौर्मा बिभीहि भोः।
झंझोर्मि वपुषो तत्स्थं दयालुं पश्य देहिनम्।
अन्ते - नाग्नितृणं दग्धुमभूत् समर्थो
यदाहितं न श्वसनोऽपहर्तुम्।
स्वस्य कर्तारमिमं न वेद
यदीह यः कोऽपि स किन्नु वेद॥

एवमेव श्लोकरचनां विधाय ताताचार्येण न केवलं मङ्गलं कृतमपि तु स्वीया काव्यरचनाशैली अपि प्रकटिता। अत्र हि परिच्छेदादौ अनुष्ठिता श्लोकरचना पादद्वयोपेता अपि च परिच्छेदान्ते चतुःपादैर्युक्ता परिलक्ष्यते।

एषु श्लोकेषु किमपि साम्यमवलोक्यतेऽस्माभिः। तेषां भावार्थेन तद् बुद्धिगोचरं भवति। तस्मात् षट्परिच्छेदेषु आद्यप्रणीतानां षट् मङ्गलश्लोकानां भावोऽयम् -

पारिजातफलायिता इयमुद्यानवृत्तिः पण्णातटस्य अलङ्कृतिः सती सकलैः आस्वादनीया। अस्मिन् पण्णारोधसि मम नाथ सुखेन भोगिनी स्वपिति। किन्तु अस्य उषःकाले विकसितकमलजित्वरी दृष्टिः मयि सदा वर्तते। मयि समीपं गच्छति सः दूरं भवति। परन्तु उदासीनं मामुपैति एव। यद्यपि मया उक्तं नैव शृणोति तथापि आगत्य आश्चर्येण प्रभाषते सः। यस्मिन् समये तं नमामि, स्तौमि वा याचनां करोमि तदा नैव किञ्चिदनुकम्पते। आश्चर्यं नाम यथाकालं सर्वं सम्पन्नमिति पश्यामि। सङ्कटसागरात् सदा मां रक्षति सः। कदाचित् एकत्र झञ्झावातः अपरत्र ऊर्मिः दृश्यते तत्काले सः नौका भूत्वा मां तारयति। ईदृशं दयालुं देहिनं पश्य।

अयं करुणाकरः निजभक्तं सर्वकालेषु रक्षति। तेन हि मानवानां सर्वकार्याणि सम्पद्यन्ते इति संसूचयति ताताचार्यः।

सर्वशक्तिमान् ईश्वर एव जगत् प्रचालयति। ऋते तस्मात् सम्पूर्णविश्वं पङ्गुत्वमाप्नोतीति भावः उद्यानवृत्तेः अन्तिमे विरचितमङ्गलश्लोकैः विव्रियते। तद्यथा -

एषः लोकः समीरितानां वाचां परिश्रम्य रसं गृह्णातु। यः हृदि सन्निविष्टस्सन् नियन्ता वर्तते सोऽसौ स्वयं वक्ता भूत्वा स्वयमेव तृप्तः भवति। कस्य आज्ञया सः वातः वाति, सूर्यः तपति, मेघः जलं वर्षति पृथिवी च सस्यश्यामला तिष्ठति? तस्य एव खलु। पवनेन रन्ध्रे आपूर्यमाणे श्रुतिप्रियध्वनिः मदीया गीतिः, एवं वृथा अभिमानः किमर्थं कीचकस्य?

कदाचित् किञ्चिदकर्तुं वा न पारयामि। किं तत्र कर्ता अहं वा एषः कश्चिदन्योऽस्ति वा? इत्यत्रापि अज्ञानमेव मे। अत्र तु अग्निरपि तस्य अनुमतिं विना तृणं दग्धुं समर्थ नाभवति। प्राप्तं श्वसनमपहर्तुं न कोऽपि प्रभवति। स्वस्य निर्माणकर्तारं न कोऽपि वेत्ति । अस्मिन् इहलोके कोऽपि तं अगोचरं ज्ञातुं नैव शक्नोति।

सर्वेषु मङ्गलश्लोकेषु भगवतः विष्णोः वर्णनं सन्दृश्यते। अपि च सैवात्र कर्ता कारयिता च। तस्य एव मनीषया विश्वेऽस्मिन् सर्वं प्रवर्तते। अस्माकं जनकः इत्यतः हिताहितं विधातुं यद्यपि स एव क्षमः तथापि सर्वदा कल्याणमेव विदधाति। कस्मिन्नपि तावती शक्तिः नास्ति तस्य इच्छाविरुद्धं कर्तुम्। परन्तु 'अहमेव कर्ता' इति अस्मदीय अभिमानः भवतीति स्पष्टयितुं कीचकस्योदाहरणं व्याख्याकारः ताताचार्य अत्र प्रयच्छति। वातः, सूर्यः, मेघः पृथिवी च तस्य आज्ञयैव कार्यं कुर्वन्ति। अस्माकं सर्वेषां नियन्ता सः हृदये एव निवसति। स्वयमेव वक्ता सन् तृप्तोऽपि सः। अनेन 'सर्वं खल्विदं ब्रह्म' इति विवेचनकारः अभिप्रैति। इयमुद्यानवृत्तिरपि तस्य कृपया पूर्णतां प्राप्नोत्।

**५) कविकर्मनिपुणता**

उद्यानवृत्तेः विवेचनकारः ताताचार्यः न केवलमुत्तमः टीकाकारः अपि तु सुकविरपि इत्यस्य प्रमाणमस्ति भामहीयकाव्याड्लकारस्य उद्यानवृत्तिः। भामहीयकाव्यालङ्कारस्य सारांशं व्याख्याकारः श्लोकद्वये इत्थं विवृणोति -

षष्ट्या शरीरं निर्णीतं शतषष्ट्या त्वलङ्कृतिः।
पञ्चाशता दोषदृष्टिः सप्तत्या न्यायनिर्णयः।।
षष्ट्या शब्दस्य शुद्धिः स्यादित्येवं वस्तुपञ्चकम्।
उक्तं षड्भिः परिच्छेदैः भामहेन क्रमेण वः।।

तथैव उद्यानवृत्तेः अन्तिमे सप्तश्लोकैः 'प्रायः जगति किञ्चिदपि तस्य अभेद्यं न' इति संसूच्य षड्भिर्वर्षैरियं षट्परिच्छेदी भामहालङ्कारविवृतिः मया विरचितेति प्रत्यपादयत् ताताचार्यः।

अथ च श्लोकत्रये भगवतः वर्णनमकरोत् तद्यथा-

अस्ति रङ्गमिति विश्रुतं पुरं
पण्णया परिगतं सदोदया।
ब्रह्म यत्न फणितल्पमाश्रितं
स्वं प्रकाशयति वैभवं स्फुटम्।।
तत्रास्त वंशानुगुणश्रुताढ्यः
श्रुतानुरूपाचरणोज्ज्वलश्रीः।
सौजन्यसिन्धुः शमवासभूमिः
दयानिधिर्देशिकतातयार्यः।।
तृतीयो नन्दनस्तस्य नन्दनेऽजनि वत्सरे।
आ जन्मनो मनो यस्य निवृत्तमसतः पथः।।इति।
परिचितपदमार्गो योऽवगाढप्रमाणः
परममहति वाक्याम्भोनिधौ दूरमग्नः।
स्वधिगतनिगमान्तः साहितीसारवित्तः
कविकुलपथपान्थः क्लृप्तनैकप्रबन्धः।।

इत्थं ताताचार्यः स्वकविप्रतिभया श्लोकरचनां विधाय कविकर्मणि नैपुण्यं प्रकटीकरोति। तथैव निजजीवनविषये किञ्चित् प्रतिपादयितुं कामयते अनेन श्लोकेन-

य: प्राच्यविद्येश्वर इत्युदीरित-
स्तन्त्रार्णवत्वेन सभाजितस्तथा।
स वृत्तिमेतामधिभामहक्रियं
श्रीशैलताताचार्यशिरोमणिर्व्यधात्॥

'यः तन्त्रार्णवत्वेन सभाजितस्सन् प्राच्यविद्येश्वर इत्युदीरितः स श्रीशैलताताचार्यशिरोमणि भामहीयालङ्कारस्य वृत्तिं व्यधात्' इति श्लोकरूपेण निवेद्य उद्यानवृत्तेः रचयितेति प्रमाणयति व्याख्याकारः। तथैव साहितीपथपरिश्रमसंस्कृतात्मा मीमांसनक्रमपरिष्कृतशेमुषीकः पङ्केरुहाक्षपदपङ्कजसङ्गतश्चेति समुपवर्ण्य निजवैशिष्ट्यमपि निर्दिशति सः। अथ च मङ्गलाचरणरचनाभिरपि कविकर्मकौशलं प्रदर्शयितुं यतते टीकाकारः ताताचार्यः। अहं कविकुलपथपान्थः, साहितीसारवित्तः, स्वधिगतनिगमान्तः परममहति वाक्याम्भोनिधौ मग्नः चास्मि इति निरूप्य निजशास्त्रज्ञानं प्रतिपादयितुमुपक्रमते उद्यानवृत्तिकारः।

एवङ्कारेण उद्यानवृत्तिद्वारा श्रीशैलताताचार्यशिरोमणेः काव्यनैपुण्यमवगम्यतेऽस्माभिः। अर्थात् काव्यशास्त्रग्रन्थविवेचनकारेण कथं भवितव्यमित्यस्य आदर्शमुदाहरणं नाम उद्यानवृत्तिकर्ता ताताचार्य इत्यत्र न काऽपि विप्रतिपत्तिः।

**६) पदव्युत्पत्तिनिवेशनम्**

श्रीशैलताताचार्यविरचितायाः उद्यानवृत्तेः इदमप्येकं वैशिष्ट्यं यत् यथास्थानं पदव्युत्पत्तिनिर्देशः सन्दृश्यते। चतुर्थपरिच्छेदे न्यायविरोधिदोषविवेचने 'न्यायः' इति पदस्य 'नीयते व्युत्पाद्यते अनेनिति न्यायः' इति विश्लेषणमकरोत् टीकाकारः। 'भिद्यते येन धर्मी स भेदः धर्मः' इति धर्मपदोत्पत्तिः। 'शपेर्वश्च' इत्युणादीसूत्रेण शबलशब्दसिद्धिः। ततः 'तत्करोति तदाचष्टे' इति वार्तिकेण णिचि शबवयतीति व्याकरणसूत्रेण साकं यथाशक्यं वार्तिकमपि उपयुज्य पदस्य व्युत्पत्तिनिवेशनमत्र ताताचार्येण अकारि। तथैव कलाविरोधिदोषनिरूपणे 'कलयति लोकशास्त्रवेक्षणेन चराचरात्मकस्य जगतः सुखदुःखानुषङ्गिता सङ्कलय्य गृह्णाति

इति कला विलक्षणा प्रज्ञा' इति कलापदस्य व्युत्पत्तिः। विवक्षितकार्यसाधनौपयिका ये गुणास्तत्रैकदेशस्य विरहमुपनिबध्य यत्र गुणान्तरं कार्यसिद्धिक्षमतया प्रतिपाद्यते महिमातिशयप्रथनाय सा विशेषोक्तिः। तथैव सम्पूर्णा हि सामुग्री कार्यं जनयति। तत्र विकलाऽपि जनयतीति वचनं विशेषोक्तिर्भवति। एकयोक्त्याऽर्थद्वयस्य सङ्क्षेपाक् समासेनोक्तिः समासोक्तिरितिः समासोक्तिपदस्य व्युत्पत्तिः दीयते उद्यानवृत्तौ। रूपकालङ्कारस्य विवेचने प्रोक्तं यत् गुणानां साम्यं दृष्ट्वा यत् उपमानेन हेतुना तद्वाचकं पदमुपादायेति यावत् उपमेयस्य तत्त्वं स्वरूपं रूप्यते क्रियते अर्थादुपमानरूपेणेति गम्यते तद् रूपकं नामालङ्कारमाहुरिति। अथवा यद् उपमानेन तत्त्वम् उपमानसम्बन्धिरूपम् उपमेयस्य रूप्यते रूपं क्रियते तद्रूपकमिति। अथवा उपमानेन सहोपमेयस्य तत्त्वं तादात्म्यम् अभिन्नत्वमिति यावत् यद्रूप्यते तद्रूपकमिति।

एवमेव उद्यानवृत्तेः सौकर्याय विवेचनकारेण तत्र-तत्र पदव्युत्पत्तिं विलिख्य व्याख्यानस्य सार्थकता संवर्धिता।

**७) वृत्तिपरिशिष्टप्रस्तुतिः**

उद्यानवृत्तिविवेचने ये ये सन्दर्भाः प्रस्तुताः तेषां संसूचनायै वृत्तेः अन्तिमे 'वृत्तिपरिशिष्टम्' योजयित्वा विवरणकारेण अध्येतॄणां जिज्ञासा परिपूरितेति सन्तोषविषयः। यथा प्रथमपरिच्छेदे कारिकायां 'शब्दच्छन्दोऽभिधानार्थाः' इति पदमस्ति। तस्मिन् विषये लोचनकारस्य अभिनवगुप्तस्य ग्रन्थे सन्दर्भाः वा उल्लेखः वा सम्प्राप्यते। लोचनकारः आह - भामहोक्तं शब्दच्छन्दोऽभिधानार्था इत्यभिधानस्य शब्दाद्भेदं भट्टोद्भटो बभाषे शब्दानामभिधानमभिधाव्यापारो मुख्यो गुणवृत्तिश्चेति। वृत्तावस्माभिरुक्तोऽधानार्थः। वस्तुतस्तु -

शब्दानुशासनज्ञानमभिधानप्रवीणता।
छन्दःप्रभेदवेदित्वमलङ्कारेषु कौशलम्॥इति।

श्रीशार्ङ्गदेवकृतसङ्गीतरत्नाकरतृतीयाध्यायश्लोकं व्याचक्षाणेन मल्लिनाथेन यदुक्तम् - शब्दानुशासनं व्याकरणशास्त्रम्। तस्य ज्ञानम्। एतेन प्रथमं तावत् सुशब्दापशब्दविवेचकेन भवितव्यमित्यर्थः। अभिधानममरकोशादि। छन्दःप्रभेदा अनुष्टुपादयः। अलङ्कारा उपमादयोऽनुप्रासादयश्च। तदनुरोधेन

नामलिङ्गानुशासनादिकोशपरत्वमेव युक्तं वक्तुम्। तृतीयपरिच्छेदे पर्यायोक्तमलङ्कारस्य उदाहरणे 'रसदाननिवृत्तये' इति पदं प्रयुक्तम्। अत्र 'रस' इति पदस्यार्थः विषमिति। ईदृशः प्रयोगः रामायणश्लोके (आ.१६.२५) परिलक्ष्यते।

तुषारपतनाच्चैव मृदुत्वादाभास्करस्य च।
शैत्यादगाग्रस्थमपि प्रायेण रसवज्जलम्॥

श्लोकेऽस्मिन् विषपरतया रसपदप्रयोगोऽस्ति इति परिशिष्टे विवेचितम्। चतुर्थे परिच्छेदे 'यतिभ्रष्टम्' इति दोषस्य कारिकायां भामहाचार्येण 'विचारणा' इति पदप्रयोगः विहितः। यस्य चार्थः 'विभज्यघटना' इत्यस्ति। तादृश अर्थः श्रीमद्रामायणेऽपि दृश्यते। 'विचार्य सर्वतो दृष्टिं कानने काननप्रियः' इत्यत्र 'विशेषेण चारयित्वा' इत्यर्थे 'विचार्य' इति प्रयुञ्जते। न तु विमृश्य इत्यर्थे। एवमेव उद्यानवृत्तौ भामहाचार्यस्य कारिकायाः योऽर्थः प्रस्तुतः स उचित इत्यस्य प्रमाणानि व्याख्याकारेण वृत्तिपरिशिष्टे प्रदाय व्याख्यायाः प्रामाणिकत्वं रक्षितमस्ति। तेन हि विवेचनकारस्य विवरणकौशलं स्तवनीयमेव। परिशिष्टप्रस्तुतिमत्र वृत्तौ समुपस्थाप्य उद्यानवृत्तेः माहात्म्यं प्रदर्श्य काव्यशास्त्रविषयः सुबोधः कृतोऽस्ति श्रीताताचार्यशिरोमणिना।

## उपसंहारः

प्राच्यविद्येश्वरेण श्रीशैलताताचार्यशिरोमणिना विरचितायाः उद्यानवृत्तेः समीक्षायामादौ प्रस्तावना विहिता। ततश्च उद्यानवृत्तिरिति नामनिर्देशविशेषः प्रस्तुतः। अस्याः वृत्तेः उद्दिष्टं किमिति विचार्य भामहीयस्य काव्यालङ्कारग्रन्थस्य परिचयः प्रदत्तः। उद्यानवृत्तेः विशेषतायाः प्रतिपादने उपोद्घातसारमुक्त्वा उपोद्घातवैशिष्ट्यानि निरूपितानि। तत्र हि चत्वारः बिन्दवस्सन्ति। ते च -उपोद्घातस्य दीर्घता, ताताचार्याणां निजविचाराणां सप्रमाणं समुपस्थापनं, परिच्छेदानां पर्यालोचनं तथा च व्याख्यानकालस्य अनुभवविवेचनानुष्ठानम्।

अथ च भामहीयकाव्यालङ्कारस्य प्रतिपरिच्छेदसारांशं निवेद्य तस्य तस्य उद्यानवृत्तिपरामर्शः विवेचितः। अस्याः उद्यानवृत्तेः पर्यालोचने पृथक्-पृथक्बिन्दूनां चर्चा विहिता। तत्रोजीव्यग्रन्थाः के सन्ति? व्याख्यानस्य भाषा कथं सुबोधा वर्तते?

विवेचनकारस्य शास्त्रपाण्डित्यं कस्मिन् कस्मिन् क्षेत्रे सन्दृश्यते। इति सविस्तरं विवृतमस्ति। प्रतिपरिच्छेदं मङ्गलाचरणं व्यरचयत् पण्डितराजताताचार्यः। तस्य वैशिष्ट्यमपि समुपवर्णितमत्र। अत्र हि वृत्तिकारस्य काव्यकर्मनिपुणतां प्रतिपाद्य तत्रस्थं पदव्युत्पत्तिनवेशनमपि समुपदर्शितम्। वृत्तिपरिशिष्टप्रस्तुतिं सङ्क्षेपेण विलिख्य उद्यानवृत्तेः भिन्नवैशिष्ट्यं गोचरीकृतम्।

विवेचनकारः श्रीशैलताताचार्यशिरोमणिः 'प्राच्यविद्येश्वर' इति तन्त्रार्णत्वेन सभाजित आसीदिति तेन समुल्लिखितमेकस्मिन् स्वरचिते श्लोके। कविकुलपथपान्थः, क्लृप्तनैकप्रबन्धः, साहितीसारवित्तः, स्वधिगतानिगमान्तः परममहति वाक्याम्भोनिधौ मग्नश्च सः नैकविधशास्त्रेषु पारङ्गत इति संसूचयति श्लोकमाध्यमेन अस्मान्। अपि च षट्परिच्छेदे अशुद्धिभिरसंख्याभिरसत्प्राया इयमुद्यानवृत्तिरस्ति या च षड्भिर्वर्षैः व्यरचयदिति तस्य वाक्यं वृत्तेः व्याख्यायाः अवधिं ज्ञापयति। वृत्तिकारस्य आत्मविश्वासमपि वेदयति च ।

वृत्तेरस्याः सुबोधता तु प्रशंसनीयैव। क्वचित् ग्रन्थप्रमाणम् उपपादयति। क्वचित्तु 'आह च', 'उक्तञ्च' इति विनिवेद्य निजकथनं प्रमाणीकरोति पण्डितराजताताचार्यः।

तेन उपोद्घातान्ते 'काव्यप्रकाशे श्रौती उपमा' इति नामनिर्देशं कृत्वा स्वीयविचाराः समुपस्थापितास्सन्ति। तत्र हि काव्यप्रकाशकारेण मम्मटेन 'उपमानोपमेययोः समानेन धर्मेण सम्बन्ध उपमा' इत्युपमालक्षणं प्रोक्तम्। परन्तु यथेवादिसब्दप्रयोगविषये तत्र या शङ्का उपपद्यते तस्याः अत्र समाधानं कृतमस्ति। प्रसङ्गेऽस्मिन् प्रदीपकारस्य आशयं बोधयित्वा प्राचामपि मतं प्रतिपादितम्। तथैव विद्याधरविद्यानाथप्रभृतयः सादृश्यस्य विशेषणतया प्रतिपादने श्रौती, अन्योपसर्जनतया प्रतिपादने आर्थीति निरूप्य प्रकाशोक्तस्य अर्थस्य अङ्गीकारं कुर्वन्ति। श्रौती तथा चार्थी उपमाभेदविषये मम्मटाचार्यस्य अभिप्रायबोधे मतभिन्नता वर्तते तेषां मतानां विवरणं प्रदाय पण्डितराजताताचार्येण समाधानं प्रदत्तम्।

वस्तुतस्तु 'काव्यप्रकाशे श्रौती उपमा' इति निबन्धस्य नास्ति उद्यानवृत्तौ समावेशः। परन्तु काव्यशास्त्रविषयः वा अलङ्कारग्रन्थविषयः वेति विचिन्त्य प्रायः ग्रन्थेऽस्मिन् अस्यान्तर्भावः स्यादिति मन्ये।

उद्यानवृत्तिमधिकृत्य पण्डितराजताताचार्यस्य वैदुष्यं निश्चयेन चकास्ति। यतो हि तस्यां सत्कवीनां मतानि नानाविधग्रन्थेभ्यः प्रमाणानि चोद्धृतानि। कस्यापि शास्त्रग्रन्थस्य व्याख्या केन प्रकारेण वा कथं कार्या इत्यस्य उत्तमुदाहरणं नाम ताताचार्यस्य उद्यानवृत्तिः इत्यत्र नास्ति संशयलेशः। आत्मीया कृतिः सामान्यजनबोध्या भवेदिति धिया व्याख्या कर्तव्या टीकाकारैः इति बोधयति उद्यानवृत्तिः। 'साहितीपथपरिश्रमसंस्कृतात्मा, पङ्केरुहाक्षपदपङ्कजसङ्गतः मीमांसनक्रमपरिष्कृतशेमुषीकः चेत्यादीनि पदानि ताताचार्यस्य प्रतिभासामर्थ्यं दृग्पथमानयन्ति। तस्मादेव उद्यानवृत्तिरियं संस्कृतक्षेत्रे स्वकीयं विशिष्टस्थानं रक्षतीति तु निश्चप्रचम्।

---------------------------------

# भामहकृते काव्यालङ्कारग्रन्थेऽन्तर्भूतानि सुभाषितानि

1) अधनस्य दातृत्वं क्लीबस्येवासत्रकौशलम्।
अज्ञस्य प्रगल्भत्वमकवेः शास्त्रवेदनम्।।(१/३)

2) विनयेन विना का श्रीः।(१/४)

3) रहिता सत्कवित्वेन गीदऋशी वाग्विदग्धता।(१/४)

4) काव्यं तु जायते जातु कस्यचित्प्रतिभावतः।(१/५)

5) विलक्ष्मणा हि काव्येन दुःसुतेनेव निन्द्यते।(१/११)

6) कुकवित्वं पुनः साक्षान्मृतिमाहुर्मनीषिणः।(१/१२)

7) न कान्तमपि निर्भूषं विभाति वनिताननम्।(१/१३)

8) स्वगुणाविष्कृतिं कुर्यादभिजातः कथञ्जनः।(१/२९)

9) संज्ञेच्छातो विधीयते।(१/३३)

10) सन्निवेशविशेषात्तु दुरुक्तमपि शोभते।
नीलं पलाशमाबद्धमन्तराले स्रजामिव।।(१/५४)

11) किञ्चिदाश्रयसौन्दर्याद्धत्ते शोभामसाध्वपि।
कान्ताविलोचनन्यस्तं मलीमसमिवाञ्जनम्।।(१/५५)

12) मालाकारो रचयति यथा साधु विज्ञाय मालाम्।
योज्यं काव्येष्ववहितधिया तद्वदेवाभिधानम्।।(१/५९)

13) युक्त्यानया मध्यमया जायन्ते चारवो गिरः।(२/७)

14) साधुः संसाराद् बिभ्यदस्मादसारात्।
कृत्वा क्लेशान्तं याति वर्त्म प्रशान्तम्।।(२/१२)

15) मुनीनपि हरन्त्येते रमणी येषु सङ्गता।(२/१३)

16) काव्यान्यपि यदीमानि व्याख्यागम्यानि शास्त्रवत्।
उत्सवः सुधियामेव हन्त दुर्मेधसो हताः।।(२/२०)

17) मदो जनयति प्रीतिं सानङ्गं मानभङ्गुरम्।
स प्रियासङ्गमोत्कण्ठां सासह्यां मनसश्शुचम्।।(२/२१)

18) कियन्तः सन्ति गुणिनः साधु साधारणश्रियः।
स्वादुपाकफलानम्राः कियन्तो वाध्वशाखिनः॥(२/३६)

19) न ज्यायान्विस्तरो मुधा।(२/३८)

20) सर्वं सर्वेण सारूप्यं नास्ति भावस्य कस्यचित्।(२/४३)

21) को वा हेतरत्वं सिन्थोर्विकारकरणं प्रति।(२/७०)

22) साधु वा साधु वाऽऽगामि पुंसामात्मैव शंसति।(२/७२)

23) गरीयानेव हि गुरून्बिर्भति प्रणयागतान्। (२/७४)

24) धीखेदायैव विस्तरः।(२/९५)

25) छायावन्तो गतव्यालाः स्वारोहाः फलदायिनः।
मार्गद्रुमा महान्तश्च परेषामेव भूतये॥(३/१८)

26) शमयन्ति क्षितेस्तापं सुराजानो घना इव।(३/१९)

27) उदयः पतनायेति।(३/३४)

28) चारोः का वास्त्यलङ्कृतिः।(३/५१)

29) गुरुभिः विवादेन।(४/७)

30) भर्तुश्छन्दानुवर्तिन्यः प्रेम घ्नन्ति न हि स्त्रियः।(४/१०)

31) श्रेयसो विनयाधानम्।(४/११)

32) व्यालवन्तो दुरारोहाः रत्नवन्तः फलान्विताः।
विषमा भूभृतस्तेभ्यो भयमाशु प्रमादिनाम्॥(४/१९)

33) कला सङ्कलनाप्रज्ञा शिल्पान्यस्याश्च गोचरः।(४/३३)

34) न्यायः शास्त्रं त्रिवर्गोक्तिर्दण्डनीतिं च तां विदुः॥(४/३९)

35) आगमो धर्मशास्त्राणि लोकसीमा च तत्कृता।(४/४८)

36) प्रायेण दुर्बोधतया शास्त्रादबिभ्यत्यमेधसः।(५/२)

37) प्रथमालीढ्मधवः पिबन्ति कटु भेषजम्।(५३)/

38) अहो भारो महान्कवेः। (५/४)

39) कारणञ्चेन्न तन्नित्यं नित्यञ्चेत्कारणं न तत्।(५/३१)

40) लोकाश्रयं काव्यम्, आगमास्तत्त्वशंसिनः।(५/३३)

41) गुरुतरधियमामस्वाराधं मनोऽकृतबुद्धिभिः।(५/६९)

42) परप्रत्ययतो यत्तु क्रियते तेन का रतिः।(६/४)

43) नान्यप्रत्ययशब्दा वागाविभाति मुदे सताम्।
परेण धृतमुक्तेव सरसा कुसुमावली॥(६/५)

44) अर्थज्ञानफलाः शब्दाः।(६/१८)

45) न चैकस्य फलद्वयम्।(६/१८)

46) अतिशेते ह्यलङ्कारमन्यं व्यञ्जनचारुता।(६/२८)

47) शब्दार्णवस्य यदि कश्चिदुपैति पारं।
भीमाम्भसश्च जलधेरिति विस्मयोऽसौ।(६/६२)

-----------------------------------------

## पादटिप्पणीः

1) अलङ्कारैर्गुणैश्चैव -----------------------स्मृतम् ।। (नाट्यशास्त्रम् - 16.5)
2) प्राप्तानि दुःखानि ----------------------सुखान्यभूवन्।। (रघुवंशम् -14.15)
3) यथा विनयेन विना श्रीः -----------वाग्विदग्धता ।। (काव्यालङ्कारः - 1.4)
4) गुरुपदेशात् जडधियोऽपि --------------------प्रतिभा एव प्रमुखकारणमिति। (काव्यालङ्कारः - 1.5)
5) ऋषभात्पञ्चमात्तस्तमात् ---------धैवतं स्मृतम्। (काव्यालङ्कारः - 4.34)
6) कवित्वसंस्काराय शब्दच्छन्दो ------ वेदितव्याः।। काव्यालङ्कारः - 1.9)
7) कुपुत्र इव कुकाव्यं --------- मरणमित्याहुः।। (काव्यालङ्कारः - 1.11,12)
8) शब्दार्थौ सहितौ काव्यम्। (काव्यालङ्कारः -1.16)
9) यथा मालाकारः साधु मालां ----- विधातव्येति।।(काव्यालङ्कारः - 1.59)
10) पण्णातटपरिष्कारः ---------------- मे वृत्तिः। (उद्यानवृत्तिः -परिच्छेदः -1)
11) मनोवक्कायकर्मभिः । (काव्यालङ्कारः - 1.1)
12) काव्यं तु जायते जातु ------------- प्रतिभावतः।।(काव्यालङ्कारः - 1.15)
13) स्मृतिर्व्यतीतविषया --------------------------- विदुः।( उद्यानवृत्तिः - 1.5)
14) गणयन्ति नापशब्दं -------------- कुकवयश्च।। ( काव्यालङ्कारः - 1.12)
15) नायकाख्यातस्ववृत्ता -------------- आख्यायिकेति। (उद्यानवृत्तिः -1.25)
16) न वक्त्रापरवक्त्राभ्याम् -------------------- दण्डिः। (उद्यानवृत्तिः - 1.29)
17) प्रतिषेधस्येव नियमस्य ------------------ हेमचन्द्रः।( उद्यानवृत्तिः - 1.29)
18) सा द्विधा वीतरागकथा ------------------- चेति। ( उद्यानवृत्तिः - 1.36)
19) विजहुस्तस्य ताः -------------------- च तत्। (काव्यालङ्कारः - 1.40)
20) मन्तव्या काव्यवैखरी। (काव्यालङ्कारः- 1.9)
21) अनिबद्धम्। (काव्यालङ्कारः - 1.18)
22) सरूपवर्णविन्यासमनुप्रासं प्रचक्षते।( काव्यालङ्कारः - 2.25)
23) स्वयुङ्कृतैरेव निदर्शने ------------- निरूपिता। ( काव्यालङ्कारः - 2.96)

24) एतावदुक्त्वा -------------------------- तमन्वयुङ्क्त। ( रघुवंशम् - 5.18)
25) यमौ द्वौ -------------------हेमचन्द्रः। (उद्यानवृत्तिः -2.8)
26) सैषा वक्रोक्तिः -------------------- विना। (काव्यालङ्कारः - 2.85)
27) प्रथमं तावदतिशयो ---------------------- नोत्कर्षमावहेत्। (ध्वन्यालोकः)
28) भामहेनाप्यतिशय ------------------- अवगन्तव्यः। ( उद्यानवृत्तिः - 2.85)
29) उपसन्नः --------------------------- प्रभाषते। (उद्यानवृत्तिः परिच्छेदः -3)
30) किञ्चिदारभमानस्य ---------------- समाहितम्। ( काव्यादर्शः - 2.298)
31) पूर्वत्राशयमाहा ----------------------- मायदः। ( काव्यादर्शः - 2.303)
32) आशयमहत्तवव्यञ्जना ------------------ तुल्यम्। ( उद्यानवृत्तिः - 3.12)
33) स धर्मेषु तन्त्रप्रयोगे श्लेषः। ( काव्यालङ्कारसूत्रवृत्तिः)
34) रत्नवत्त्वादगाध ------------------ मुदन्वता।( काव्यालङ्कारः - 3.20)
35) न दूषणायायम् --------------- इवावभोत्स्यते। ( काव्यालङ्कारः - 4.51)
36) अहं नमामि -------------------- पश्यामीति। (उद्यानवृत्तिः परिच्छेदः - 4)
37) क्रमवृत्तिषु ------------------------ प्रतिक्षणम्। (काव्यालङ्कारः - 4.5)
38) यदुक्तं वर्णसङ्घातः ------- अर्थप्रत्यायकाश्च भवन्तीति। ( उद्यानवृत्तिः 4.5)
39) स्फुरत्तटि ---------------------- दिवोऽभितः। ( काव्यालङ्कारः - 4.23)
40) ऋषभात् ------------------------ पीडितर्षभः। ( काव्यालङ्कारः - 4.34)
41) स्वरसाधारणं ------------------ विशेषणात्। (उद्यानवृत्तिः - 4. 34,35)
42) इच्छाम्यकर्तुं --------------------- कश्चिदन्यः। ( उद्यानवृत्तिः 4.51)
43) अथ प्रतिज्ञाहेत्वा ---------------------- प्रतीतये। (काव्यालङ्कारः - 5.1)
44) व्याददाति मुखं ------------------------ माम्। ( उद्यानवृत्तिः परिच्छेदः-5)
45) वाच्यं यत्र --------------------------- विवेक्तव्यः। ( उद्यानवृत्तिः - 5.2)
46) जात्याद्यपोहेषु ------------------ अपोह इत्युच्यते। ( उद्यानवृत्तिः - 5.8)
47) प्रत्यक्षानुमानागमाः प्रमाणानि। ( योगसूत्रम् - स. पा. 1.7)
48) अवलोक्य मतानि ---------------- सूनुनेदम्। ( काव्यालङ्कारः - 6.64)
49) सामायिकत्वाच्छब्दार्थसम्प्रत्ययस्य। ( गौतमन्यायसूत्रम्)

50) औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः। ( जैमिनीन्यायसूत्रम्)

51) सर्वस्य कर्तारमिमं न वेद। ( उद्यानवृत्तिः - 6.64)

52) तं वीक्ष्य वेपथुमती ------------------- न तस्थौ। ( कुमारसम्भवम् - 5.85)

53) दिवं स्पृशति ------------------- महीयते। (महाभारतम्)

54) सूत्रकृत्पदकारे ------------------- विदुर्यथा। ( काव्यालङ्कारः - 4.22)

55) प्रतीतशब्दमोज ---------------- कृतीनां मतम्। (काव्यालङ्कारः - 2.18)

56) श्रद्धेयं जगति मतं हि पाणिनीयम्। ( काव्यालङ्कारः - 6.63)

57) अभ्यस्तेषु प्रयोक्तव्य ----------------- शोभते। ( काव्यालङ्कारः - 6.59)

58) सिद्धो यश्चोप ------------------- योगविभागजम्। (काव्यालङ्कारः - 6.29)

59) दर्शनादेकदेशस्य ------------ सिद्धोऽन्यतरस्य तु। ( उद्यानवृत्तिः - 5.23)

60) भिन्न द्विधा समासोक्तिः --------------- वाङ्मयम्। ( काव्यादर्शः - 2.363)

61) वर्णभेदादिदं भिन्नं ------------------ दुस्तरम्। ( काव्यालङ्कारः - 6.20)

62) षष्ट्या शरीरं ---------------------- क्रमेण वः। ( उद्यानवृत्तिः - 6.65,66)

63) शब्दानुशासन ------------------------------कौशलम्। (सङ्गीतरत्नाकरः)

64) तुषारपतना --------------------------- जलम्। ( रामायणम् - 6.25)

----------------------------------------

